गौ. शा.-संस्कृत-ग्रन्थमालायास्त्रयोविंशतितमप्रसूनम् ।

( सन् १९४० के लिये )

काशीस्थ राजकीय प्रथम परीक्षा में निर्धारित

# विदुर-नीति

( प्रथम और द्वितीय अध्याय मात्र )



सम्पादकः—
गौरीनाथ-पाठक ।
काशी ।

* श्रीः *

# विदुर-नीति

सन् १९४० के नवीन नियमानुसार—

काशीस्थ-राजकीय-प्रथम-परीक्षा-पाठ्य-स्वीकृत।

सुबोधिनी टीका सहित।

काशी-शारदा-भवन-द्वारा प्रकाशित

और

लक्ष्मणराव देशमुख द्वारा शारदा यन्त्रालयमें मुद्रित।

सन् १९३९.

❋ श्रीः ❋

सटीका—

# विदुरनीतिः ।

## प्रथमोऽध्यायः ।

वैशम्पायन उवाच—

**द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः ।**
**विदुरं द्रष्टुमिच्छामि तमिहानय मा चिरम् ॥ १ ॥**

( अन्वयः ) महाप्राज्ञः धृतराष्ट्रः महीपतिः द्वाःस्थं प्राह, विदुरं द्रष्टुम् इच्छामि, तम् इह आनय चिरं मा कुर्विति शेषः ॥ १ ॥

( सुबोधिनी ) महाप्राज्ञः = महापण्डितः, धृतराष्ट्रः-महीपतिः = धृतराष्ट्रनामा भूपतिः, द्वाःस्थं, द्वारि तिष्ठतीति द्वाःस्थः तं द्वाःस्थं = द्वारपालमित्यर्थः, प्राह = उवाच, विदुरं = व्यासपुत्रं, द्रष्टुम् = अवलोकयितुम्, इच्छामि = अभिलषामि, अहमितिशेषः, तं = विदुरं, इह = मम समीपे, आनय = प्रापय, चिरं = विलम्बं, मा = न, कुर्वितिशेषः ॥ १ ॥

( हिन्दी ) वैशम्पायनजीने कहा—महापण्डित धृतराष्ट्र महाराज द्वारपालसे बोले कि मैं विदुरसे मिलना चाहता हूं उन्हें यहां ले आओ, देर न करो ॥ १ ॥

**प्रहितो धृतराष्ट्रेण दूतः क्षत्तारमब्रवीत् ।**
**ईश्वरस्त्वां महाराजो महाप्राज्ञ दिदृक्षति ॥ २ ॥**

( अन्वयः ) धृतराष्ट्रेन प्रहितः दूतः क्षत्तारम् अब्रवीत्, हे महाप्राज्ञ ! ईश्वरः महाराजः त्वां दिदृक्षति ॥ २ ॥

( सुबोधिनी ) धृतराष्ट्रेन = एतन्नाम्ना महाराजेन, प्रहितः = प्रेषितः, दूतः = द्वारपालः, क्षत्तारम् = विदुरं, अब्रवीत् = अकथयत्, हे महाप्राज्ञ ! = महापण्डित!, ईश्वरः, ईशितुं शीलमस्येतीश्वरः = शक्तिशाली, महाराजः = धृतराष्ट्रभूपतिः, त्वां = भवन्तं, दिदृक्षति = द्रष्टुमिच्छति ॥ २ ॥

( हिन्दी ) धृतराष्ट्रके भेजे हुए दूतने विदुरसे कहा हे महापण्डित ! ऐश्वर्यशाली महाराज धृतराष्ट्र आप को देखना चाहते हैं ॥ २ ॥

एवमुक्तस्तु विदुरः प्राप्य राजनिवेशनम् ।
अब्रवीद्धृतराष्ट्राय द्वाःस्थं मां प्रति वेदय ॥ ३ ॥

( अन्वयः ) एवम् उक्तः विदुरः राजनिवेशनं प्राप्य अब्रवीत्—हे द्वाःस्थ ! मां धृतराष्ट्राय प्रतिवेदय ॥ ३ ॥

( सुबोधिनी ) एवम् = उक्तप्रकारेण, उक्तः = कथितः, विदुरः = व्यासपुत्रः, राजनिवेशनं = राजभवनं, प्राप्य = आसाद्य, अब्रवीत् = अकथयत्, हे द्वाःस्थ ! = द्वारपालक !, मां धृतराष्ट्राय प्रतिवेदय = विदुरः समागत इति महाराजं निवेदयेत्यर्थः ॥ ३ ॥

( हिन्दी ) इस प्रकार कहे गये विदुर राजभवनमें आकर द्वारपालसे बोले कि महाराज धृतराष्ट्रको मेरे आनेकी सूचना दो ॥ ३ ॥

द्वाःस्थ उवाच—

विदुरोऽयमनुप्राप्तो राजेन्द्र तव शासनात् ।
द्रष्टुमिच्छति ते पादौ किं करोतु प्रशाधि माम् ॥४॥

( अन्वयः ) हे राजेन्द्र ! तव शासनात् विदुरः अनुप्राप्तः, ते पादौ द्रष्टुम् इच्छति, अयं किं करोतु मां प्रशाधि ॥ ४ ॥

( सुबोधिनी ) हे राजेन्द्र ! = भूपेन्द्र !, तव = भवतः, शासनात् = आदेशात्, विदुरः, अनुप्राप्तः = सम्प्राप्तः, ते = भवतः, पादौ = चरणौ,

द्रष्टुम् = अवलोकयितुम्, इच्छति = अभिलषति, अयं = एष विदुरः, किं करोतु = किं विदधातु, 'इति' मां, प्रशाधि = आज्ञापय ॥ ४ ॥

( हिन्दी ) हे राजन् ! आपकी आज्ञासे विदुर आये हुए हैं, वे आपके चरणोंमें हाजिर होना चाहते हैं, वे क्या करें यह आज्ञा आप मुझे दीजिये ॥ ४ ॥

धृतराष्ट्र उवाच—

प्रवेशय महाप्राज्ञं विदुरं दीर्घदर्शिनम् ।
अहं हि विदुरस्यास्य नाकल्पो जातु दर्शने ॥ ५ ॥

( अन्वयः ) महाप्राज्ञं दीर्घदर्शिनं विदुरं प्रवेशय, हि अहम् अस्य विदुरस्य दर्शने जातु अकल्पः न ॥ ५ ॥

( सुबोधिनी ) महाप्राज्ञं, दीर्घदर्शिनं = सुदूरविचारशालिनं, विदुरं, प्रवेशय = अन्तः प्रापय, हि = यतः, अहं, अस्य = विदुरस्य, दर्शने = अवलोकने, जातु = कदाचिदपि, अकल्पः = असमर्थः, न, विदुरदर्शनं सर्वदैव ममाभीष्टमित्यर्थः ॥ ५ ॥

( हिन्दी ) बड़े बुद्धिमान और दूरदर्शी विदुरको भीतर लाओ, मैं इनसे मिलने के लिये सदा तयार हूँ ॥ ५ ॥

द्वाःस्थ उवाच—

प्रविशान्तःपुरं क्षत्तर्महाराजस्य धीमतः ।
नहि ते दर्शनेऽकल्पो जातु राजाऽब्रवीद्धि माम् ॥ ६ ॥

(अन्वयः) हे क्षत्तः ! धीमतः महाराजस्य अन्तःपुरं प्रविश, ते दर्शने राजा जातु अकल्पः नहि, इति माम् अब्रवीत् ॥ ६ ॥

( सुबोधिनी ) हे क्षत्तः ! = हे विदुर !, धीमतः = बुद्धिमतः, महाराजस्य = राजेन्द्रधृतराष्ट्रस्य, अन्तःपुरं = प्रासादस्यान्तः महाराज समीपं, प्रविश = उपसीद, ते = तव, दर्शने = अवलोकने, राजा = धृतराष्ट्रः, जातु = कदाचिदपि, अकल्पः = असमर्थः, नहि, इति = एवं, मां, "राजा" अब्रवीत् = अकथयत् ॥ ६ ॥

( हिन्दी ) हे विदुर ! बुद्धिमान् महाराज धृतराष्ट्रके अन्तःपुरमें आप प्रवेश करें, आपके दर्शनके लिये महाराज कभी भी असमर्थ नहीं हैं, वे आपके दर्शनकेलिये सर्वदा तयार रहते हैं ऐसा उन्होंने मुझसे कहा है ॥ ६ ॥

वैशंपायन उवाच—

ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनम् ।
अब्रवीत्प्रांजलिर्वाक्यं चिन्त्यमानं नराधिपम् ॥ ७ ॥

( अन्वयः ) ततः विदुरः धृतराष्ट्रनिवेशनं प्रविश्य प्राञ्जलिः 'सन्' चिन्त्यमानं नराधिपं वाक्यम् अब्रवीत् ॥ ७ ॥

( सुबोधिनी ) ततः = अन्तःपुरप्रवेशाज्ञाप्राप्त्यनन्तरं, विदुरः, धृतराष्ट्रनिवेशनं, धृतराष्ट्रस्य भूपतेः निवेशनं भवनं, प्रविश्य = उपगम्य, प्राञ्जलिः = बद्धाञ्जलिः 'सन्' चिन्त्यमानं = चिन्तामग्नं, नराधिपं-नरस्य अधिपो नराधिपः तं नराधिपं = मनुजेशं, वाक्यं = वचनं अब्रवीत् ॥७॥

( हिन्दी ) अन्तःपुरमें जानेकी आज्ञा द्वारपालसे मिलजानेके बाद विदुर धृतराष्ट्रके भवनमें प्राप्त होकर अञ्जलि बाँधकर चिन्तामग्न महाराज धृतराष्ट्रको बोले ॥ ७ ॥

विदुरोऽहं महाप्राज्ञ संप्राप्तस्तव शासनात् ।
यदि किंचन कर्तव्यमयमस्मि प्रशाधि माम् ॥ ८ ॥

( अन्वयः ) हे महाप्राज्ञ ! विदुरः, अहं, तव = भवतः, शासनात् सम्प्राप्तः यदि किञ्चन कर्तव्यं, 'तर्हि' मां प्रशाधि, अयम् अहम् अस्मि ॥ ८ ॥

( सुबोधिनी ) हे महाप्राज्ञ ! विदुरः, अहं, तव = भवतः, शासनात् = आदेशात्, सम्प्राप्तः = उपस्थितः, "अस्मि" यदि, किञ्चन = किमपि कर्तव्यं = मया कर्तुं योग्यं कार्यं, 'उपस्थितं चेत् तर्हि' मां, प्रशाधि = आज्ञापय, अहं, अयं, उपस्थितः = आज्ञापालनार्थं सन्नद्धोऽस्मीत्यर्थः ॥८॥

( हिन्दी ) हे महाप्राज्ञ ! विदुर मैं आपकी आज्ञासे हाजिर हुआ हूँ, यदि मेरे योग्य कोई कार्य हो तो आज्ञा दें मैं उसे करनेके लिये तैयार हूँ ॥ ८ ॥

धृतराष्ट्र उवाच—

संजयो विदुर प्राज्ञो गर्हयित्वा च मां गतः ।
अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति ॥ ९ ॥

( अन्वयः ) हे विदुर ! प्राज्ञः सञ्जयः मां गर्हयित्वा गतः, श्वः सभामध्ये अजातशत्रोः वाक्यं वक्ष्यति ॥ ९ ॥

( सुबोधिनी ) हे विदुर !, प्राज्ञः = विद्वान्, सञ्जयः, मां, गर्हयित्वा = निन्दित्वा, गतः = इतः प्रस्थितः, श्वः = उत्तरदिने, सभामध्ये-सभाया मध्यं सभामध्यं तस्मिन् सभामध्ये = सभायां, अजातशत्रोः-न जातः शत्रुर्यस्य सः तस्य अजातशत्रोः = युधिष्ठिरस्य, वाक्यं = वचनं, वक्ष्यति = कथयिष्यति ॥ ९ ॥

( हिन्दी ) हे विदुर ! चतुर सञ्जय मुझे भला बुरा कहकर यहाँसे चला गया है और वह कल सभामें युधिष्ठिरका संदेशा कहेगा ॥ ९ ॥

तस्याद्य कुरुवीरस्य न विज्ञातं वचो मया ।
तन्मे दहति गात्राणि तदकार्षीत्प्रजागरम् ॥ १० ॥

( अन्वयः ) अद्य कुरुवीरस्य तस्य वचः मया न विज्ञातं, तत् मे गात्राणि दहति, तत् प्रजागरम् अकार्षीत् ॥ १० ॥

( सुबोधिनी ) अद्य = अद्यपर्यन्तमित्यर्थः, कुरुवीरस्य, कुरुषु वीरः कुरुवीरस्तस्य = कौरववीरस्य, तस्य = सञ्जयस्य, वचः = वचनं, मया, न विज्ञातं = न ज्ञातं, तत् = तस्मात् कारणात्, मे = मम, गात्राणि = शरीराणि, दहति = सन्तापयति, तत् = अज्ञातं वचः, प्रजागरं = सततं जागरणं, अकार्षीत् = चकार ॥ १० ॥

( हिन्दी ) कौरवोंमें बहादुर उस सञ्जयका वाक्य आज तक

मैं जान न सका, इसलिये उसके न जानने की व्याकुलतासे मेरा शरीर सन्तप्त होरहा है, उसके वचनके न जाननेनेही मुझे सारी रात जागरण कराया ॥ १० ॥

जाग्रतो दह्यमानस्य श्रेयो यदनुपश्यसि ।
तद् ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि ११ ॥

( अन्वयः ) जाग्रतः दह्यमानस्य यत् श्रेयः अनुपश्यसि, हे तात ! तत् त्वं नः ब्रूहि हि धर्मार्थकुशलः असि ॥ ११ ॥

( सुबोधिनी ) जाग्रतः = उन्निद्रस्य "अपि" दह्यमानस्य = ज्वलतः, यत् = यत्किञ्चिदपि, श्रेयः = कल्याणं, अनुपश्यसि = अवगच्छसि, हे तात ! = हे प्रिय, तत् = श्रेयः, नः = अस्मान्, ब्रूहि = कथय, हि = यतः, त्वं = भवान्, धर्मश्च अर्थश्च धर्मार्थौ, तयोः कुशलः धर्मार्थकुशलः, धर्मार्थज्ञानोपदेशचतुरः, असि = भवसि ॥ ११ ॥

( हिन्दी ) मैं जगकर चिन्ताकी आगमें जल रहा हूँ, इस लिये जिसमें मेरा हित आपको समझ पड़े उसे कहें, हे प्रिय ! ऐसी अवस्था में नीतिचतुर आपही धर्मोपदेश और अर्थ रक्षा के मार्ग का ज्ञान कराने में चतुर हो ॥ ११ ॥

यतः प्राप्तः संजयः पाण्डवेभ्यो न मे यथावन्मनसः प्रशांतिः।
सर्वेन्द्रियाण्यप्रकृतिं गतानि किं वक्ष्यतीत्येव मेऽद्य प्रचिन्ता॥

( अन्वयः ) सञ्जयः पाण्डवेभ्यः यतः प्राप्तः 'ततः' मे मनसः यथावत् प्रशान्तिः न सर्वेन्द्रियाणि अप्रकृतिं गतानि अद्य किं वक्ष्यति इति एव मे चिन्ता ॥ १२ ॥

( सुबोधिनी ) सञ्जयः, पाण्डवेभ्यः = पाण्डवसकाशात्, यतः = यद्दिनमारभ्य, प्राप्तः = आगतः, 'तद्दिनमारभ्य' मे = मम, मनसः = चित्तस्य, यथावत् = यथार्हं, प्रशान्तिः = समाधानं, न = नहि, सर्वाणि च तानि इन्द्रियाणि सर्वेन्द्रियाणि = चक्षुरादीनि, अप्रकृतिं गतानि =

स्वस्वभावं परित्यज्य स्थितानि, वर्तन्त इति शेषः, अथ, 'स सञ्जयः सभायां' किं वक्ष्यति = किं कथयिष्यति, इति = एतावती, एव, मे, चिन्ता वर्तत इति शेषः ॥ १२ ॥

( हिन्दी ) सञ्जय पाण्डवोंके यहाँसे जिस दिनसे आया है उसी दिनसे मैं अशान्त हो रहा हूँ, मेरी समस्त इन्द्रियाँ भी अपने अपने विषयको ग्रहण करनेमें असमर्थ हो रही हैं, आज सञ्जय सभामें क्या कहेगा यही एक मात्र चिन्ता हमें व्याकुल कर रही है ॥ १२ ॥

विदुर उवाच—

अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।
हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ॥ १३ ॥

( अन्वयः ) प्रजागराः, बलवता, अभियुक्तं, दुर्बलं, हीनसाधनं, हृतस्वं कामिनं चोरं आविशन्ति ॥ १३ ॥

( सुबोधिनी ) प्रजागराः = जागराणि, बलवता = स्वस्मादधिकशक्तिमता, अभियुक्तं = अभियुञ्जानं, दुर्बलं = बलहीनं, हीनं साधनं यस्य स तं हीनसाधनं = निकृष्टसैन्यसम्पत्तिं, हृतस्वं = गतधनं, कामिनं = विषयिणं, चोरं = तस्करं, आविशन्ति = प्रविशन्ति ॥ १३ ॥

( हिन्दी ) प्रबलशत्रुसे आक्रान्त, दुर्बली, असहाय, कामी, चोर और जिसका धन चोरी चला गया हो ऐसे लोगोंको जागरण हुआ करता है ॥ १३ ॥

कच्चिदेतैर्महादोषैर्न स्पृष्टोऽसि नराधिप ।
कच्चिन्न परवित्तेषु गृध्यन्न परितप्यसे ॥ १४ ॥

( अन्वयः ) हे नराधिप ! 'त्वं' एतैः महादोषैः स्पृष्टः न असि कच्चित् ? 'तथा' परवित्तेषु गृध्यन् न परितप्यसे कच्चित् ॥ १४ ॥

( सुबोधिनी ) नराणाम् अधिपो नराधिपस्तत्सम्बुद्धौ हे नराधिप ! = नरेश ! एतैः = पूर्वकथितैः, महादोषैः = महान्तश्च ते दोषा महादोषा-

स्तैः = गुरुपातकैः, स्पृष्टः = संलग्नः, न असि कच्चित् = न भवसि किम्, 'तथा' परस्य वित्तानि तेषु = परधनेषु, गृध्यन् = लुभ्यन्, न परितप्यसे = न सन्तप्यसे कच्चित् ॥ १४ ॥

( हिन्दी ) हे राजन् ! क्या आप ऊपर कहे हुए महादोषोंमेंसे किसी एक दोषके शिकार तो नहीं हुए हैं या दूसरेके धनको हड़प करनेकी इच्छा तो नहीं हुई है ॥ १४ ॥

धृतराष्ट्र उवाच—

**श्रोतुमिच्छामि ते धर्म्यं परं नैःश्रेयसं वचः ।**
**अस्मिन् राजर्षिवंशे हि त्वमेकः प्राज्ञसंमतः ॥ १५ ॥**

( अन्वयः ) 'अहं' धर्म्यं परं नैःश्रेयसं ते वचः श्रोतुं इच्छामि हि अस्मिन् राजर्षिवंशे त्वं एकः प्राज्ञसम्मतः ॥ १५ ॥

( सुबोधिनी ) अहं, धर्मादनपेतं धर्म्यं = धर्मयुक्तं, परं = अत्यधिकं, नैःश्रेयसं = कल्याणकरं, ते = तव, वचः = वचनं, श्रोतुम् = आकर्णयितुं, इच्छामि = अभिलषामि, हि = यतः, अस्मिन् राजर्षिवंशे = वर्तमाने मूर्धन्यराजवंशे, त्वं = भवानेव, एकः = अद्वितीयः, प्राज्ञैः सम्मतः प्राज्ञसम्मतः = विद्वदादृतः, असीति शेषः ॥ १५ ॥

( हिन्दी ) मैं धर्मसे युक्त सर्वोत्तम कल्याणको देने वाले आपके वचनको सुनना चाहता हूँ, क्योंकि वर्तमान इस बड़े राजवंशमें आप ही एक हैं जिसकी प्रशंसा बड़े बड़े विद्वान् भी किया करते हैं ॥ १५ ॥

विदुर उवाच—

**राजा लक्षणसंपन्नस्त्रैलोक्यस्याधिपो भवेत् ।**
**प्रेष्यस्ते प्रेषितश्चैव धृतराष्ट्र युधिष्ठिरः ॥ १६ ॥**

( अन्वयः ) लक्षणसम्पन्नः राजा त्रैलोक्यस्य अधिपः भवेत्, हे धृतराष्ट्र ! प्रेष्यः सः युधिष्ठिरः ते 'वनं' प्रेषितः ॥ १६ ॥

( सुबोधिनी ) लक्षणैः सम्पन्नः लक्षणसम्पन्नः = सकलराजलक्षण-

युक्तः, राजा, त्रयाणां लोकानां समाहारस्त्रिलोकं, तदेव त्रैलोक्यं तस्य = लोकत्रयस्य, अधिपतिः = स्वामी, भवेत् = भवितुं अर्हेत्, प्रकर्षेण एषणीयः प्रेषणीयः = सादरं संप्राह्यः, युधि तिष्ठतीति युधिष्ठिरः = पाण्डवानां ज्येष्ठः, ते = त्वया, 'वनं' प्रेषितः = प्रहितः ॥ १६ ॥

( हिन्दी ) जिसमें समस्त राजलक्षण वर्तमान होवें वही राजा तीनों लोकका स्वामी हो सकता है। इस तरहके गुणोंसे युक्त और सदा अपने पास रखने योग्य युधिष्ठिर था जिसे कि तूने वन भेज दिया॥

विपरीततरश्च त्वं भागधेये न संमतः ।
अर्चिषां प्रक्षयाच्चैव धर्मात्मा धर्मकोविदः ॥ १७ ॥

( अन्वयः ) धर्मात्मा धर्मकोविदः 'त्वं' अर्चिषां प्रक्षयात् विपरीततरः भागधेये न सम्मतः ॥ १७ ॥

( सुबोधिनी ) धर्मात्मा = धर्म्ममूर्त्तिः, धर्मकोविदः = धर्म्मशास्त्रपण्डितः, त्वं, अर्चिषां = नेत्रज्योतिषां, प्रक्षयात् = नाशात्, अतिशयेन विपरीतः विपरीततरः = राजलक्षणहीनः, भागधेये = राज्यांशे, न संमतः = अनधिकारी, अयोग्य इत्यर्थः ॥ १७ ॥

( हिन्दी ) धर्मशास्त्रके मार्मिक विद्वान् होते हुए भी आप नेत्रसे हीन हैं इसलिये राज्यकाके अधिकारी नहीं हैं ॥ १७ ॥

आनृशंस्यादनुक्रोशाद्धर्मात्सत्यात्पराक्रमात् ।
गुरुत्वात्त्वयि संप्रेक्ष्य बहून् क्लेशांस्तितिक्षते ॥ १८ ॥

( अन्वयः ) आनृशंस्यात् अनुक्रोशात् धर्मात् सत्यात् पराक्रमात् त्वयि गुरुत्वात् बहून् क्लेशान् तितिक्षते ॥ १८ ॥

( सुबोधिनी ) न नृशंसः अनृशंसः, तस्य भावः आनृशंस्यं तस्मात् = हिंसाया अभावात्, अनुक्रोशात् = दयालुभावात्, धर्मात् = धर्माचरणात्, सत्यात् = सत्यमार्गानुसरणात्, पराक्रमात् = पौरुषकर्मकरणात्, त्वयि = भवति, गुरुत्वात् = गुरुभावात्, सम्प्रेक्ष्य = ज्ञात्वापी-

त्यर्थः, 'सः युधिष्ठिरः' बहून्=अनेकान्, क्लेशान्=कष्टान्, तितिक्षते =सहते ॥ १८ ॥

( हिन्दी ) वह युधिष्ठिर, हिंसा न करनेसे; दयालु होनेसे, धर्म और सत्य मार्गका अनुसरण करनेसे, पराक्रम करनेसे और सदा आपमें गुरुभाव रखनेसे ही जानकरभी अनेक कष्ट सहता है ॥ १८ ॥

**दुर्योधने सौबले च कर्णे दुःशासने तथा ।**
**एतेष्वैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ॥ १९ ॥**

( अन्वयः ) दुर्योधने सौबले कर्णे तथा दुःशासने एतेषु ऐश्वर्यं आधाय कथं भूतिम् इच्छसि ॥ १९ ॥

( सुबोधिनी ) दुर्योधने, सौबले=शकुनि नाम्ना प्रसिद्धे दुर्योधन मातुले, कर्णे=सूतपुत्रे, तथा दुःशासने=दुर्योधनभ्रातरि, एतेषु= उक्तदुर्योधनप्रभृतिषु, ऐश्वर्यं=राज्यविभूतिं, आधाय=स्थापयित्वा, तेषामधीनो भूत्वेत्यर्थः, त्वं, कथं=केन प्रकारेण, भूतिं=आत्मनः विभूतिं, इच्छसि=अभिलषसि ॥ १९ ॥

( हिन्दी ) दुर्योधन सौबल कर्ण और दुःशासन प्रभृतिमें अपने राज्यकी बागडोर रखकर तूं अपनी विभूतिका कल्याण कैसे कर सकता है ? ॥ १९ ॥

**आत्मज्ञानं समारंभस्तितिक्षा धर्मनित्यता ।**
**यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ २० ॥**

( अन्वयः ) आत्मज्ञानं समारंभः तितिक्षा धर्मनित्यता यं अर्थात् न अपकर्षन्ति सः वै पण्डितः उच्यते ॥ २० ॥

( सुबोधिनी ) आत्मनः ज्ञानं आत्मज्ञानं=स्वस्वरूपावगतिः, समारंभः=उद्यमशीलत्वं, तितिक्षा=सहनशीलता, धर्मनित्यता= धर्मेषु नित्यंअभिरतिः, 'एते पदार्थाः' यं=पुरुषं, अर्थात्=अर्थं पुरुषार्थाद् नापकर्षन्ति=आक्रष्टुं न प्रभवन्ति, सः वै=स एव, पण्डितः

=कर्तव्याकर्तव्यविवेकशाली, उच्यते=कथ्यते, जनैरितिशेषः ॥ २० ॥

( हिन्दी ) आत्मज्ञान, उद्यमशील, सहनशीलता, सदा धर्ममें अनुराग ये भाव पुरुषार्थसे जिसे डिगाते नहीं ऐसा त्यागी जितेन्द्रिय ही पण्डित कहा जाता है ॥ २० ॥

निषेवते प्रशस्तानि निन्दितानि न सेवते ।
अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम् ॥ २१ ॥

( अन्वयः ) 'यः' प्रशस्तानि निषेवते, निन्दितानि न सेवते, अनास्तिकः श्रद्दधानः एतत् पण्डितलक्षणम् ॥ २१ ॥

( सुबोधिनी ) यः=पुरुषः, प्रशस्तानि=सत्कर्माणि, निषेवते=अनुतिष्ठति, निन्दितानि=निन्द्यकर्माणि, न सेवते=न अनुतिष्ठति, न नास्तिकः अनास्तिकः=नास्तिको न वर्तते, श्रद्दधानः=श्रद्धायुक्तः, एतत् =पूर्वोक्तं, पण्डितानां लक्षणं पण्डितलक्षणं=पण्डितचिन्हं वर्तते॥२१॥

( हिन्दी ) जो पुरुष सत् कर्म करे निन्दितकर्म न करे, वेद और ईश्वरको माने तथा श्रद्धालु हो—यही पण्डितोंका लक्षण है ॥ २१ ॥

क्रोधो हर्षश्च दर्पश्च ह्रीस्तंभो मान्यमानिता ।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ २२ ॥

( अन्वयः ) क्रोधः हर्षः दर्पः ह्रीस्तम्भः मान्यमानिता यं अर्थात् न अपकर्षन्ति स वै पण्डित उच्यते ॥ २२ ॥

( सुबोधिनी ) क्रोधः, हर्षः=आनन्दः, दर्पः=अभिमानः. परावज्ञानमित्यर्थः, आत्मानं मानार्हं मन्यते स मान्यमानी तस्य भावः मान्यमानिता=अहम्मन्यता, ह्रीः=लज्जा, स्तम्भः=धाष्ट्र्यं, यं=पुरुषं, अर्थात्=पुरुषार्थात्, न अपकर्षन्ति=न च्यावयन्ति, स वै=स एव, पण्डितः, उच्यते=बुधैरिति शेषः ॥ २२ ॥

( हिन्दी ) क्रोध, हर्ष, अभिमान, अपनेको मानके योग्य मानना

डिठाई आदि जिस पुरुषको पुरुषार्थसे न डिगा सके वही पण्डित है ॥ २२ ॥

यस्य कृत्यं न जानन्ति मंत्रं वा मंत्रितं परे ।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥ २३ ॥

( अन्वयः ) परे यस्य कृत्यं मन्त्रं मन्त्रितं वा न जानन्ति अस्य कृतं एव जानन्ति स वै पण्डितः उच्यते ॥ २३ ॥

( सुबोधिनी ) परे = शत्रवः, यस्य = राज्ञः, कृत्यं = अनुष्ठानं, मन्त्रं = विचारः, मन्त्रितं = विचारितं कार्यं, वा, न जानन्ति, अस्य = राज्ञः, कृतम् एव = मन्त्रानुष्ठानानन्तरं फले परिणतं कर्म्म एव, जानन्ति = अवगच्छन्ति, स वै = स एव, पण्डितः = नीतिकोविदः, उच्यते ॥२३॥

( हिन्दी ) जिसके कार्य या सलाहको शत्रु पहलेसे न जान पावे, कार्य हो चुकने परही उसे उसकी खबर हो, वही तो पण्डित है ॥ २३ ॥

यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ २४ ॥

( अन्वयः ) यस्य कृत्यं शीतं उष्णं भयं रतिः समृद्धिः असमृद्धिः वा न विघ्नन्ति सवै पण्डितः उच्यते ॥ २४ ॥

( सुबोधिनी ) यस्य = पुरुषस्य, कृत्यं = कर्म, शीतं = शैत्यं, उष्णं = उष्मा, भयं = भीतिः, रतिः = विषयासक्तिः, समृद्धिः = ऐश्वर्यं, असमृद्धिः = अनैश्वर्य्यं, वा, न विघ्नन्ति = नप्रतिबध्नन्ति, स पण्डित उच्यते ॥ २४ ॥

( हिन्दी ) जिस पुरुषके प्रारम्भ किये कर्मको शीत, उष्ण, भय, विषयासक्ति, धन का प्रभाव या निर्धनता कोई भी रोक नही सकता अर्थात् जो मनुष्य उपर्युक्त प्रकारकी अनेक विघ्नबाधाओंके आने पर भी अपने संकल्पसे डिग न सके वही पण्डित है ॥ २४ ॥

यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्तते ।
कामादर्थं वृणीते यः स वै पंडित उच्यते ॥ २५ ॥

( अन्वयः ) यस्य संसारिणी प्रज्ञा धर्मार्थौ अनुवर्तते, यः कामाद् अर्थं वृणीते सः वै पण्डितः उच्यते ॥ २५ ॥

( सुबोधिनी ) यस्य = पुरुषस्य, संसारिणी = व्यवहारोपयोगिनी, प्रज्ञा = मतिः, धर्मश्च अर्थश्च धर्मार्थौ = यथाक्रममुपस्थितौ धर्मार्थ-पुरुषार्थौ, अनुवर्तते = अनुसरति, यश्च कामात् = तृतीयपुरुषार्थात्, अर्थं = द्वितीयपुरुषार्थं, वृणीते = स्वीकरोति, कामपुरुषार्थापेक्षया अर्थपुरुषार्थ-मेव श्रेष्ठं मन्यते संसारिदशायामपि यः धर्मार्थावेव साधयतीत्यर्थः, स वै पण्डित उच्यते ॥ २५ ॥

( हिन्दी ) जिसकी व्यावहारिक बुद्धि भी धर्म और अर्थका ही अनुसरण करती है और जो कामपुरुषार्थकी अपेक्षा अर्थ पुरुषार्थको ही अधिक अच्छा समझता है वही पण्डित कहा जाता है ॥ २५ ॥

यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।
न किंचिदवमन्यन्ते नराः पण्डितबुद्धयः ॥ २६ ॥

( अन्वयः ) पण्डितबुद्धयः नरा यथाशक्ति चिकीर्षन्ति, यथाशक्ति च कुर्वते, न किञ्चिद् अवमन्यन्ते ॥ २६ ॥

(सुबोधिनी) पण्डिता बुद्धिर्येषान्ते पण्डितबुद्धयः = सदसद्विवेकमतयः, नराः = जनाः, शक्तिमनतिक्रम्य यथाशक्ति = स्वबलानुसारं, चिकीर्षन्ति = कर्म कर्तुमिच्छन्ति, यथाशक्ति = शक्त्यनुसारं कुर्वते = विदधति च ॥ २६ ॥

( हिन्दी ) पण्डित-बुद्धिवाले लोग अपने बलके तारतम्यको समझ करही काम करना चाहते हैं और अपने बलके तारतम्यके अनुसार ही काम करते भी हैं और वे किसीका तनिक भी अनादर नहीं करते ॥ २६ ॥

क्षिप्रंविजानाति चिरं शृणोति विज्ञाय चार्थं भजते न कामात्।
नासंपृष्टो व्युपयुंक्ते परार्थे तत्प्रज्ञानं प्रथमं पण्डितस्य ॥ २७ ॥

( अन्वयः ) क्षिप्रं विजानाति, चिरं शृणोति, विज्ञाय अर्थं भजते, कामात् न ( भजते ), नासंपृष्टः परार्थे व्युपयुङ्क्ते पण्डितस्य तत् प्रथमं प्रज्ञानम् ॥ २६ ॥

( सुबोधिनी ) क्षिप्रं = कठिनमपि विषयं द्रुतं, विजानाति = अवगच्छति, चिरं = सुकरमपि विषयं चिरकालं, शृणोति = विचारयतीत्यर्थः, विज्ञाय = ज्ञात्वा, कर्तव्याकर्तव्यविवेकपूर्वकमवगत्यैवेत्यर्थः, अर्थं = अर्थ-पुरुषार्थं, भजते = सेवते, असंपृष्टः = यथावत् न पृष्टः, परार्थे = परप्रयोजने नव्युपयुङ्क्ते = वाग्व्ययं न करोति, पण्डितस्य = सदसद्विवेकप्रज्ञावतः, तत् = क्षिप्रं विज्ञानादि, प्रथमं, प्रज्ञानं = चिह्नम् ॥ २७ ॥

( हिन्दी ) जो मनुष्य कठिन विषयको भी शीघ्र ही समझले, चिरकाल तक उसपर विचार करे और खूब समझबूझ करही अर्थका सेवन करे बिना पूछे दूसरेके विषयमें न बोले, यह पंडितका प्रथम लक्षण है ॥ २७ ॥

नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥ २८ ॥

( अन्वयः ) पण्डितबुद्धयः नराः अप्राप्यं न अभिवाञ्छन्ति, नष्टं शोचितुं न इच्छन्ति, आपत्सु च न मुह्यन्ति ॥ २८ ॥

( सुबोधिनी ) पण्डिता बुद्धिर्येषान्ते पण्डितबुद्धयः = सदसद्-विवेकमतयः नराः, अप्राप्यं = अलभ्यं, न अभिवाञ्छन्ति = लब्धुं नेच्छन्ति, नष्टं = स्वसत्वनिर्गतं, 'वस्तु' शोचितुं = चिन्तयितुं, न इच्छन्ति, आपत्सु = अतिकठिनास्वपि विपत्सु, न मुह्यन्ति = विवेकशून्या न भवन्ति ॥ २८ ॥

( हिन्दी ) पण्डित प्रज्ञावाले मनुष्य अलभ्य वस्तुकी इच्छा नहीं करते, नष्ट होगई वस्तुकी फिर चिन्ता नहीं करते और आपत्ति आने पर घबड़ाते नहीं ॥ २८ ॥

निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ।
अवन्ध्यकालो वश्यात्मा स वै पंडित उच्यते ॥ २९ ॥

( अन्वयः ) यः, निश्चित्य, प्रक्रमते, कर्मणः, न अन्तर्वसति (यश्च) अवन्ध्यकालः, वश्यात्मा, स, वै, पण्डितः, उच्यते ॥ २९ ॥

( सुबोधिनी ) यः, निश्चित्य = प्रारिप्सितमिदं कार्यं नूनमहं समाप्तिं नेष्यामीति निश्चित्यैव, प्रक्रमते = प्रारभते, कर्मणः = प्रारब्धस्य कर्मणः, न अन्तर्वसति = असमाप्य नोपरमते, अवन्ध्यः कालो यस्य सः अवन्ध्यकालः = अव्यर्थसमयः, वश्यात्मा = वशीकृतचेताः, स वै = स एव, पण्डितः = सदसद्विवेकमतिः, उच्यते ॥ २९ ॥

( हिन्दी ) जो मनुष्य प्रारम्भ किये जाने वाले कामको समाप्त करनेकी शक्ति अपनेमें समझ करही उसे प्रारम्भ करता है, विना समाप्त किये उससे विमुख नहीं होता, अपने समयको व्यर्थ विताता नहीं और अपने मनको वशमें रखता है वही मनुष्य पण्डित कहलाता है ॥ २९ ॥

आर्यकर्मणि रज्यन्ते भूतिकर्माणि कुर्वते ।
हितं च नाभ्यसूयन्ति पण्डिता भरतर्षभ ॥ ३० ॥

( अन्वयः ) हे भरतर्षभ ! पण्डिताः आर्य्यकर्मणि, रज्यन्ते, भूतिकर्माणि, कुर्वते, हितं, च, न, अभ्यसूयन्ति ॥ ३० ॥

( सुबोधिनी ) हे भरतर्षभ ! हे धृतराष्ट्र ! = पण्डिताः, आर्याणां कर्म आर्यकर्म्म तस्मिन् = शिष्टपुरुषाचरितकर्मणि, रज्यन्ते = सक्ता भवन्ति, भूत्यै कर्माणि, भूतिकर्माणि = ऐश्वर्यवृद्धिकराणि कृत्यानि, कुर्वते, हितं च = हितोपदेष्टारं च, न अभ्यसूयन्ति = ननिन्दन्ते ॥ ३० ॥

( हिन्दी ) हे धृतराष्ट्र ! पण्डित मनुष्य अच्छे कामोंमें अनुराग रखते हैं, ऐश्वर्य्यवृद्धि करने वाले कार्योंको करते हैं और हितैषियोंकी अवहेलना नहीं करते ॥ ३० ॥

न हृष्यत्यात्मसंमाने नावमानेन तप्यते ।
गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ॥ ३१ ॥

( अन्वयः ) यः, आत्मसम्माने, न, हृष्यति, अवमानेन, न तप्यते, गाङ्गः, ह्रदः, इव, अक्षोभ्यः, सः पण्डितः, उच्यते ॥ ३१ ॥

( सुबोधिनी ) यः, आत्मनः सम्माने=स्वसम्माने, न हृष्यति न प्रसन्नो भवति, अवमानेन=अपमानेन, न तप्यते=न खिद्यते, गंगायाः अयं गाङ्गः=गंगासम्बन्धी, ह्रदः इव=जलाशय इव, अक्षोभ्यः= अक्षुब्धः, ( भवतीति शेषः) सः, पंडितः=सदसद्विवेकी, उच्यते ॥३१॥

( हिन्दी ) जो नर अपना सम्मान होने पर प्रसन्न नहीं होता और अपमान होनेपर खिन्न नहीं होता गंगाकी तरह क्षुब्ध नही होने वाला वह नर पंडित कहलाता है ॥ ३१ ॥

तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम् ।
उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ॥ ३२ ॥

( अन्वयः ) सर्वभूतानां तत्त्वज्ञः, सर्वकर्मणां योगज्ञः, मनुष्याणां उपायज्ञः, नरः, पण्डितः, उच्यते ॥ ३२ ॥

(सुबोधिनी) सर्वे भूताः सर्वभूतास्तेषां सर्वभूतानां=जीवमात्राणां, तत्त्वं जानातीति तत्त्वज्ञः=जीवमात्र निष्ठविनाशित्वादि धर्मज्ञः, सर्वाणि कर्माणि सर्वकर्माणि तेषां सर्वकर्मणां, योगं जानातीति योगज्ञः= प्रकारज्ञः, मनुष्याणां=नराणाम्, उपायं जानातीति उपायज्ञः,=मानव सम्पाद्योपायाभिज्ञः, नरः, पण्डितः उच्यते ॥ ३२ ॥

( हिन्दी ) सभी प्राणियोंके तत्त्वको अखिल कर्मोंके प्रकारोंको, और मानुषिक उद्योगको जानने वाला मनुष्य पण्डित कहलाता है ॥३२॥

प्रवृत्तवाक् चित्रकथ ऊहवान् प्रतिभानवान् ।
आशु ग्रंथस्य वक्ता च यः स पंडित उच्यते ॥ ३३ ॥

( अन्वयः ) यः, प्रवृत्तवाक्, चित्रकथः, ऊहवान् प्रतिभानवान्, ग्रन्थस्य, आशु वक्ता च, स पण्डितः उच्यते ॥ ३३ ॥

(सुबोधिनी) यः, प्रवृत्ता वाग् यस्य सः प्रवृत्तवाक्=अकुण्ठितवचनः,

चित्रा कथा यस्य स चित्रकथः = व्यक्त्यभाषी, ऊहोऽस्यास्तीत्यूहवान् = वितर्कशीलः, प्रतिभानवान् = प्रत्युत्पन्नमतिमान्, ग्रन्थस्य, आशु = शीघ्रं, वक्ता = पण्डितः उच्यते ॥ ३३ ॥

( हिन्दी ) जो मनुष्य, लगातार भाषण देनेवाला, व्यक्त्यभाषी, वितर्कशील प्रतिभावाला और शीघ्र ही ग्रन्थको व्यक्त करनेवाला हो वह पण्डित कहलाता है ॥ ३३ ॥

श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।
असंभिन्नार्यमर्यादः पंडिताख्यां लभेत सः ॥ ३४ ॥

( अन्वयः ) यस्य श्रुतं प्रज्ञानुगं, प्रज्ञाचैव श्रुतानुगा, असंभिन्नार्थमर्यादः, सः, पण्डिताख्यां लभेत ॥ ३४ ॥

( सुबोधिनी ) यस्य = नरस्य श्रुतं = शास्त्रं, प्रज्ञामनुगच्छतीति प्रज्ञानुगं = बुद्ध्यनुसारि, ( भवतीति शेषः ), प्रज्ञा च = बुद्धिश्च, श्रुतमनुगच्छतीति श्रुतानुगा = शास्त्रानुसारिणी, 'न संभिन्ना आर्य्यमर्यादा येन सोऽसंभिन्नार्यमर्यादः = अनुल्लंघितशिष्टमर्यादः, सः, पण्डितस्याख्या पण्डिताख्या तां = पण्डितपदवीं, लभेत = प्राप्नुयात् ॥३४॥

( हिन्दी ) जिस मनुष्यकी बुद्धि शास्त्रके अनुकूल, और शास्त्र उसकी बुद्धिके अनुसार हो और जो शिष्टसीमाको नहीं लाँघे हुये हो वह पण्डित कहलाता है ॥ ३४ ॥

अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः ।
अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ ३५ ॥

( अन्वयः ) अश्रुतः, समुन्नद्धः, दरिद्रश्च, महामनाः, अकर्मणा, अर्थान्, च, प्रेप्सुः, बुधैः, मूढः, इति उच्यते ॥ ३५ ॥

( सुबोधिनी ) न विद्यते श्रुतमस्याश्रुतः = शास्त्रविहीनः समुन्नद्धः = उद्धतः, दरिद्रश्च = हीनश्च (सन्नपीति शेषः) महामनाः = उच्चमनोरथः, अकर्मणा = निन्द्यकर्मणा, अर्थान् = धनानि, प्रेप्सुः = लिप्सुः ( भवति ) बुधैः मूर्खः, इत्युच्यते ॥ ३५ ॥

( हिन्दी ) शास्त्र और लोकव्यवहारसे शून्य, उद्दण्ड, दरिद्र, होकर भी महामना बननेकी इच्छा रखने वाला और निन्द्य कर्मसे धन प्राप्त करनेकी इच्छा करने वाले मनुष्यको विद्वान लोग मूर्ख कहते हैं ॥ ३६ ॥

स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्याचरति मित्रार्थे यश्च मूढः स उच्यते ॥ ३६ ॥

( अन्वयः ) यः, स्वम्, अर्थम्, परित्यज्य, परार्थं, अनुतिष्ठति, यश्च, मित्रार्थे, मिथ्या, चरति, सः, मूढः, उच्यते ॥ ३६ ॥

( सुबोधिनी ) यः, स्वं=स्वकीयं, अर्थं=प्रयोजनं, परित्यज्य, त्यक्त्वा, परस्यार्थं परार्थं=परप्रयोजनं, अनुतिष्ठति=करोति, यश्च जनः, मित्रस्यार्थे मित्रार्थे=मित्रलाभार्थं, मिथ्या चरति=मिथ्याडम्बरं करोति, सः मूढः, मूर्खं उच्यते ॥ ३६ ॥

( हिन्दी ) जो मनुष्य अपना काम छोड़कर दूसरोंके कार्यके झंझटमें पड़ता है और मित्रके कार्यके वास्ते मिथ्या आडम्बर रचता है वह मूर्ख कहलाता है ॥ ३६ ॥

अकामान्कामयति यः काम्यमानान्परित्यजेत् ।
बलवन्तं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥ ३७ ॥

( अन्वयः ) यः, अकामान्, कामयति, काम्यमानान्, परित्यजेत्, यः, च, बलवन्तं, द्वेष्टि, तं, मूढचेतसं, आहुः ॥ ३७ ॥

( सुबोधिनी ) यः, अकामान्=अनभिलषितान्, कामयति= इच्छति, काम्यमानान्=अभिलषितान्, परित्यजेत्, यश्च, बलमस्यास्तीति तं बलवन्तं=बलशालिनम् द्वेष्टि, तं=पूर्वोक्तं मूढं चेतो यस्य तं मूढ-चेतसं=मूर्खं, आहुः=वदन्ति ॥ ३७ ॥

( हिन्दी ) जो मनुष्य न चाहने वालेको चाहता है और चाहने वालेको छोड़ देता है और बलवानोंसे द्वेष रखता है ऐसे मनुष्यको मूर्ख कहते हैं ॥ ३७ ॥

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ ३८ ॥

( अन्वयः ) अमित्रं, मित्रं, कुरुते, मित्रं च, द्वेष्टि, हिनस्ति, च, दुष्टं कर्म च, आरभते, तं मूढचेतसं, आहुः ॥ ३८ ॥

( सुबोधिनी ) अमित्रं = शत्रुं, मित्रं = सखायं, कुरुते = स्वीकरोति मित्रं, द्वेष्टि = वैरायते, हिनस्ति = ताडयति च, दुष्टं = अकृत्यं, कर्म, आरभते = विदधाति तं = पूर्वोक्तं, मूढचेतसं = मूर्खं, आहुः ॥ ३८ ॥

( हिन्दी ) जो मनुष्य शत्रुको मित्र, मित्रको शत्रु समझता है और अकृत्यको प्रारम्भ करता है, उसे मूर्ख कहते हैं ॥ ३८ ॥

संसारयति कृत्यानि सर्वत्र विचिकित्सते ।
चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ॥ ३९ ॥

( अन्वयः ) हे भरतर्षभ ! कृत्यानि, संसारयति, सर्वत्र, विचिकित्सते, क्षिप्रार्थे, चिरं, करोति, सः, मूढः ॥ ३९ ॥

( सुबोधिनी ) हे भरतर्षभ != हे भरतकुल श्रेष्ठ ! धृतराष्ट्र ! ( य इति शेषः ) कृत्यानि = कर्माणि, संसारयति = विस्तारयति, सर्वत्र = सर्वमनुष्येषु, विचिकित्सते = शंकते, क्षिप्रार्थे = शीघ्रंकर्तव्येऽर्थे, चिरंकरोति = विलम्बं करोति, सः = पूर्वोक्त नरः, मूढः = मूर्खः ( उच्यत इति शेषः ) ॥ ३९ ॥

( हिन्दी ) हे धृतराष्ट्र ! जो नर अपने कामको अधिक फैलाता है, सबके प्रति शंका करता है और जल्दी किये जाने वाले काममें देर लगाता है वह मूढ कहलाता है ॥ ३५ ॥

श्राद्धं पितृभ्यो न ददाति दैवतानि न चार्चति ।
सुहृन्मित्रं न लभते तमाहुर्मूढचेतसम् ॥ ४० ॥

( अन्वयः ) पितृभ्यः, श्राद्धं, न, ददाति, दैवतानि च, न अर्चति, सुहृन्मित्रं, न, लभते, तं, मूढचेतसं, आहुः ॥ ४० ॥

( सुबोधिनी ) पितृभ्यः = पित्रादिभ्यः, श्रद्धया दीयते यत्तच्छ्राद्धं = तर्पणादिकं, न ददाति = न कुरुते इत्यर्थः, दैवतानि = देवताः, च, न अर्चति = न पूजयति, सुहृन्मित्रं = हितचिन्तकं मित्रं, न लभते = न प्राप्नोति, तं = पूर्वोक्तं, मूढचेतसं मूर्खं, आहुः ॥ ४० ॥

( हिन्दी ) जो पितरोंका श्राद्धादि नहीं करता, देवताकी पूजा नहीं करता और हितैषी मित्रोंसे स्पृहा नहीं रखता वह मूर्ख है ॥ ४० ॥

अनाहूतः प्रविशति अपृष्टो बहु भाषते ।
अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥ ४१ ॥

( अन्वयः ) मूढचेताः, नराधमः, अनाहूतः, प्रविशति, अपृष्टः, बहु, भाषते, अविश्वस्ते, विश्वसिति ॥ ४१ ॥

( सुबोधिनी ) मूढं चेतो यस्य स मूढचेताः = सदसद्विवेकशून्यः, नरेषु अधमो नराधमः = पुरुषाधमः, न आहूतोऽनाहूतः = अनाकारितः ( सन् ) प्रविशति, अपृष्टः ( प्रश्नं विनापीत्यर्थः ) भाषते = ब्रवीति, न विश्वस्ते = विश्वासरहिते ( जन इति शेषः ) विश्वसिति = विश्वासं गच्छति ॥ ४१ ॥

( हिन्दी ) मूर्ख मनुष्य सर्वदा बिना बुलाये प्रवेश करता है, बिना पूछे बोलता है और अविश्वासी आदमीपर विश्वास करता है ॥ ४१ ॥

परं क्षिपति दोषेण वर्तमानः स्वयं तथा ।
यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥ ४२ ॥

( अन्वयः ) यः स्वयं तथा वर्तमानः, परं दोषेण क्षिपति अनीशानः, च, क्रुध्यति, स नरः, मूढतमः ॥ ४१ ॥

( सुबोधिनी ) यो नरः स्वयं तथा वर्तमानः = दोषेर्विद्यमानः ( सन् ) परं = इतरं, दोषेण = दुर्गुणेन, क्षिपति = आक्षिपति, न

ईशानोऽनीशानः = असमर्थः, क्रुध्यति = कुप्यति, सः = एवं विधो नरः, अतिशयो मूढः मूढतमः = मूर्खतमः ( भवतीति शेषः ) ॥ ४२ ॥

( हिन्दी ) जो स्वयं दोषी होते हुये दूसरोंको दोषी समझता है और अशक्त होकर भी कोप करता है वह मूर्ख कहलाता है ॥ ४२ ॥

आत्मनो बलमज्ञाय धर्मार्थपरिवर्जितम् ।
अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ॥ ४३ ॥

( अन्वयः ) इह धर्मार्थपरिवर्जितं, आत्मनः, बलं, अज्ञाय, नैष्कर्म्यात्, अलभ्यं, इच्छन्, मूढबुद्धिः, उच्यते ॥ ४३ ॥

( सुबोधिनी ) इह = अस्मिल्लोके, धर्मश्चार्थश्च धर्मार्थौ, ताभ्यां परिवर्जितं धर्मार्थपरिवर्जितं = धर्मार्थशून्यं, आत्मनः = स्वस्य, बलं = सामर्थ्यं, अज्ञाय = अविदित्वा, कर्मभ्यो निष्क्रान्तो निष्कर्मा, तस्य भावः नैष्कर्म्यं, तस्मान्नैष्कर्म्यात् = किमप्यकृत्वैवेत्यर्थः, अलभ्यं = अप्राप्यं, इच्छन् वाञ्छन्, मूढा बुद्धिर्यस्य सो मूढबुद्धिः = मूर्खः, उच्यते ॥ ४३ ॥

( हिन्दी ) इस लोकमें मूर्ख नर धर्म और अर्थसे शून्य अपने बलका निश्चय न करके विना प्रयत्नके ही अलभ्य वस्तुके पानेकी इच्छा करता है ॥

अशिष्यं शास्ति यो राजन्यश्च शून्यमुपासते ।
कदर्यं भजते यश्च तमाहुर्मूढचेतसम् ॥ ४४ ॥

( अन्वयः ) हे राजन्! यः, अशिष्यं, शास्ति, यः च शून्यं, उपासते, यः च कदर्यं, भजते, तं, मूढचेतसं, आहुः ॥ ४४ ॥

( सुबोधिनी ) हे राजन् ! यः, शासितुं योग्यं शिष्यं न शिष्यमशिष्यं = अनधिकारिणं, शास्ति = शिक्षयति यश्च, शून्यं = भजनानर्हं, उपासते = भजते, यश्च कदर्यं = कृपण, भजते = सेवते, तं = पूर्वोक्तं नरं, मूढचेतसं = मूर्खं, आहुः = वदन्ति ॥ ४४ ॥

( हिन्दी ) हे राजन् ! जो मनुष्य अनधिकारीको शिक्षा देता है, असेव्य और कृपणकी सेवा करता है वह मूर्ख समझा जाता है ॥ ४४ ॥

अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव वा ।
विचरत्यसमुन्नद्धो यः स पण्डित उच्यते ॥ ४५ ॥

( अन्वयः ) यः, महान्तं, अर्थम्, वा, विद्याम्, ऐश्वर्यम्, एव आसाद्य, असमुन्नद्धः, विचरति, सः, पण्डितः, उच्यते ॥ ४५ ॥

( सुबोधिनी ) यः, महान्तं=अतिशयं, अर्थं=धनं, वा, विद्यां= चतुःषष्टिविद्यां, ऐश्वर्यं=प्रभावं, एव आसाद्य=प्राप्य असमुन्नद्धः= अनुद्धतः, विचरति, स नरः, पण्डितः, उच्यते ॥ ४५ ॥

( हिन्दी ) जो मनुष्य अपारधन, विद्या या ऐश्वर्यको पाकर भी उद्धत नहीं होता वह पण्डितकी पदवीको प्राप्त करता है ॥ ४५ ॥

एकः सम्पन्नमश्नाति वस्ते वासश्च शोभनम् ।
योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ॥ ४६ ॥

( अन्वयः ) यः, भृत्येभ्यः, असंविभज्य, एकः, संपन्नं, अश्नाति, शोभनं, वासः, च, वस्ते, ततः, कः नृशंसतरः ॥ ४६ ॥

( सुबोधिनी ) यः, भृत्येभ्यः=सेवकेभ्यः, असंविभज्य=सम-विभागपूर्वकं भृत्यपुत्रकलत्रेभ्यो न दत्वा, एकः=एकाकी ( एव ) संपन्नं=स्वादु भोजनं, अश्नाति=भुङ्क्ते, शोभनं=सुन्दरं, वासः= वस्त्रं 'च' वस्ते=परिधत्ते, ततः=तस्माद्, कः, नृशंसतरः= क्रूरतरः ( अस्तीति शेषः न कोऽपीत्यर्थः ) ॥ ४६ ॥

( हिन्दी ) जो अपने सेवक आदिको विना दिये अकेला ही स्वादिष्ट भोजन करता है और सुन्दर वस्त्र पहनता है उससे बढ़कर संसारमें कोई दूसरा क्रूर मनुष्य नहीं है ॥ ४६ ॥

एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।
भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥ ४७ ॥

( अन्वयः ) एकः पापानि कुरुते महाजनः फलं भुङ्क्ते, भोक्तारः विप्रमुच्यन्ते, कर्त्ता, दोषेण, लिप्यते ॥ ४७ ॥

( सुबोधिनी ) एकः = एकाकी एव, पापानि = दुष्कर्माणि, कुरुते = विधत्ते, महाजनः = जनसमुदायः, फलं = पापजन्यफलं, भुङ्क्ते, भोक्तारः = फलभोगिनः, विप्रमुच्यन्ते = कालेन ततो वियुज्यन्ते, कर्त्ता = पापी, दोषेण = दुष्कर्मजन्यपापेन, लिप्यते = युज्यते ॥ ४७ ॥

( हिन्दी ) एक आदमी पाप करता है और जन समुदायको उसका फल भोगना पड़ता है, कुछ समय बीतने पर भोग करनेवाले पापसे मुक्त हो जाते हैं और पाप करने वाला मूल पुरुष पापसे लिप्त रहजाता है अर्थात् तुमने अन्याय किया, उससे उत्पन्न युद्धका फल सबको भोगना पड़ेगा । ऐश्वर्यका भोग सब करेंगे, किन्तु पापके भागी तुम्हीं होगे॥४७॥

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ ४८ ॥

( अन्वयः ) धनुष्मता, मुक्तः, इषुः, एकं, हन्यात्, वा, न हन्याद्, बुद्धिमता, उत्सृष्टा, बुद्धिः, सराजकं, राष्ट्रं, हन्यात् ॥ ४८ ॥

( सुबोधिनी ) धनुरस्यास्तीति तेन धनुष्मता = धनुर्धारिणा, मुक्तः = त्यक्तः, इषुः = चापः, एकं = एकमपि, लक्ष्यीभूतं वस्तु हन्यात = मारयेत, वा न हन्याद् = न मारयेत् ( किन्चिदिति शेषः ) बुद्धिरस्यास्तीति तेन बुद्धिमता = प्रज्ञावता, उत्सृष्टा = प्रयुक्ता, बुद्धिः = प्रज्ञा, राज्ञां समूहो राजकं तेन सहितं सराजकं, राष्ट्रं = राज्यं हन्याद् = विनाशयेत् ॥ ४८ ॥

( हिन्दी ) धनुषधारीके बाणका निशाना कभी लगता है कभी नहीं भी लगता है परन्तु बुद्धिमान्की चतुराई कभी व्यर्थ नहीं जाती वह राजा और राज्य दोनोंका नाश कर सकती है ॥ ४८ ॥

एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु ।
पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भव ॥४९॥

( अन्वयः ) एकया द्वे विनिश्चित्य, चतुर्भिः, त्रीन्, च वशे, कुरु पंच जित्वा, षट्, विदित्वा, सप्त हित्वा, सुखी, भव ॥ ४९ ॥

( सुबोधिनी ) एकया = बुद्ध्या, द्वे = कार्याकार्ये, विनिश्चित्य = निर्णीय, चतुर्भिः = सामदानदण्डभेदैः, त्रीन् = मित्रोदासीनशत्रून् च, वशे कुरु = स्ववशे स्थापय, पंच = ज्ञानेन्द्रियाणि, जित्वा = वशे कृत्वा, षट् = संन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्यषड्गुणान्, विदित्वा = ज्ञात्वा, स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पंचमम् = महच्च दण्डपारुष्यमर्थदूषणमेव च इति सप्त, हित्वा = दूरीकृत्य, सुखमस्यास्तीति सुखी, भव = सुखमनुभवेत्यर्थः ॥ ४९ ॥

( हिन्दी ) एक बुद्धिसे दो ( कार्य और अकार्य ) का निर्णय करके चार ( साम दान भेद दंड ) उपायोंसे तीन ( शत्रु मित्र और उदासीन ) को वशमें करे फिर पाँच ज्ञानेन्द्रियोंका दमनकर सन्धि, विग्रह यान, आसन, द्वैधीभाव और समाश्रय आदि छ गुणोंको अच्छी प्रकार समझकर अन्तमें सात ( वेश्या, जुआ, शिकार, शराब, कठोर वचन, दण्डकी कठोरता, अन्यायसे धनोपार्जन ) विषयोंका त्याग करके मनुष्य सुखी होवे ॥ ४९ ॥

एकं विषरसो हन्ति शस्त्रेणैकश्च वध्यते ।
सराष्ट्रं सप्रजं हन्ति राजानं मंत्रविप्लवः ॥ ५० ॥

( अन्वयः ) विषरसः, एकं, हन्ति, शस्त्रेण, एकः, वध्यते, मंत्रविप्लवः, सराष्ट्रं, सप्रजं राजानं, हन्ति ॥ ५० ॥

( सुबोधिनी ) विषस्य रसः विषरसः = कालकूटः, एकं = एकं जीवं. हन्ति = मारयति, शस्त्रेण = आयुधेन, एकः, वध्यते = हन्यते 'किन्तु' मंत्राणां विप्लवो मंत्रविप्लवः = मन्त्रभेदः, राष्ट्रेण सहितं सराष्ट्रं = राज्य सहितं, प्रजाभिः सहितं सप्रजं, राजानं = नृपं, हन्ति = विनाशयति ॥ ५० ॥

( हिन्दी ) विषसे एक मरता है शस्त्रसे एकही मारा जाता है, पर मंत्र फूट जानेपर राजा, राज्य और प्रजा सभीका नाश हो जाता है ॥ ५० ॥

एकः स्वादु न भुंजीत एकश्चार्थान्न चिंतयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥ ५१ ॥

( अन्वयः ) एकः, स्वादु, न, भुंजीत, एकः, च, अर्थान्, न, चिन्तयेत्, एकः, अध्वानं, न गच्छेत्, एकः, सुप्तेषु, न जागृयात् ॥ ५१ ॥

( सुबोधिनी ) एकः = एकाकी, स्वादु = स्वादुरसं भोजनं, न भुञ्जीत = न भक्षयेत्, एकः, च, अर्थान् = धनानि, न चिन्तयेत् = प्राप्तुं नेच्छेत्, एकः, अध्वानं = मार्गं, न गच्छेत्, एकः, सुप्तेषु = शनेषु, न जागृयात् = न उन्निद्रो भवेत् ॥ ५१ ॥

(हिन्दी) राजन् अकेले स्वादिष्ट भोजन न करे, अकेले किसी कामको न सोचें, और अकेले मार्ग न चले नतो सोयेहुओंमें अकेले जागे ॥ ५१ ॥

एकमेवाद्वितीयं तद्यद्राजन्नावबुध्यसे ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥५२॥

( अन्वयः ) हे राजन् ! पारावारस्य नौः, इव, एकम्, एव, अद्वितीयं, स्वर्गस्य, सोपानं, यद्, सत्यं, तत्, न, अवबुध्यसे ॥ ५२ ॥

( सुबोधिनी ) हे राजन् ! = हे धृतराष्ट्र !, पारवारस्य = समुद्रस्य, नौरिव = तरणिरिव, एकम्, एव, अद्वितीयं = स्वसजातीयरहितमित्यर्थः, स्वर्गस्य = स्वर्गलोकस्य, सोपानं = आरोहणसाधनं, यत्, सत्यं = तत्, न, अवबुध्यसे = न जानासि ॥ ५२ ॥

( हिन्दी ) हे राजन् ! जैसे समुद्रके पारजानेका उपाय एकमात्र नाव है, वैसे ही सत्य बोलना स्वर्ग जानेकी सर्वश्रेष्ठ सीढी है पर दुःख है कि तुम इसे नहीं जानते ॥ ५२ ॥

एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ५३ ॥

( अन्वयः ) क्षमावतां एकः, दोषः, उपपद्यते, द्वितीयः न, यत्, जनः, क्षमया, युक्तं, एनं, अशक्तं, मन्यते ॥ ५३ ॥

( सुबोधिनी ) क्षमा विद्यते येषान्तेषां क्षमावतां=क्षमाशीलानां, एकः, दोषः, उपपद्यते=उपलभ्यते=, द्वितीयः=इतरः, न=नैवोपलभ्यते यत्, क्षमया=क्षान्त्या, युक्तं=क्षमाशीलमित्यर्थः, एनं, जनं, लोकः अशक्तं=अवश्यदण्ड्यमपि जनमयं दण्डेन न शिक्षितवानिति असमर्थं, मन्यते=अनुमन्यते ॥ ५३ ॥

( हिन्दी ) क्षमा करनेवाला असमर्थं समझा जाता है उसमें यही एक दोष है ॥ ५३ ॥

सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम् ।
क्षमागुणो ह्यशक्तानां शक्तानां भूषणं क्षमा ॥५४॥

(अन्वयः) अस्य=क्षमाशीलस्य राज्ञः, सः=असामर्थ्यप्रकल्पनरूपः दोषः, न मन्तव्यः=न स्वीकर्त्तव्यः, हि=यतः, क्षमा, परमं=सर्वोत्कृष्टं, बलं,क्षमा,अशक्तानां=शक्तिहीनानां कृते, गुणः=विशेषता,क्षमा शक्तानां =बलवतां, कृते, भूषणम्=अलंकारः ( अस्तीति शेषः ) ॥ ५४ ॥

( हिन्दी ) परन्तु इसको दोष न समझना चाहिये, क्योंकि क्षमा मनुष्यका परम बल है, क्षमा अशक्तोंके लिये गुण और शक्तोंके लिये भूषण है ॥ ५४ ॥

क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते ।
शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः ॥५५॥

( अन्वयः ) लोके, क्षमा, वशीकृतिः, क्षमया किं न साध्यते, यस्य, करे, शान्तिखड्गः ( तस्य ) दुर्जनः किं करिष्यति ॥ ५५ ॥

( सुबोधिनी ) लोके=भुवने, क्षमा, वशी क्रियते इति वशीकृतिः वशीकरणं, क्षमया, किं=कार्यं न साध्यते, अपितु सर्वमेव कार्यं साध्यत इत्यर्थः, यस्य=यस्य पुरुषस्य, करे=हस्ते, शान्तिरेव खड्गः शान्तिखड्गः

=क्षमारूपः खड्गः 'वर्तते' 'तस्य' दुर्जनः=खलः, किं करिष्यति=किं हानं कर्तुं शक्ष्यति, न किमपीत्यर्थः ॥ ५५ ॥

( हिन्दी ) लोकमें क्षमा एक वशीकरण मंत्र है, क्षमासे सभी कार्य सिद्ध हो सकता है, जिसके हाथमें क्षमारूपी खड्ग है उसका दुर्जन क्या कर सकता है ॥ ५५ ॥

अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ।
अक्षमावान्परं दोषैरात्मानं चैव योजयेत् ॥ ५६ ॥

( अन्वयः ) अतृणे, पतितः, वह्निः, स्वयमेव, उपायान्तरं विनैव उपशाम्यति, अक्षमावान्, परं आत्मानं च दोषैः योजयेत् ॥ ५६ ॥

( सुबोधिनी ) अतृणे=तृणवर्जिते, पतितः=प्राप्तः, वह्निः=अग्निः, स्वयमेव, उपशाम्यति=शान्तिं गच्छति, न वर्तते क्षमास्यासौ अक्षमावान्=अक्षमो मनुष्यः, परं=परकीयं, आत्मानं=स्वंच, दोषैः योजयेत्, दोषानुत्पादयतीत्यर्थः ॥ ५६ ॥

( हिन्दी ) तृण रहित प्रदेशमें गिरी हुई आग अपने आप बुझजाती है, और जिसमें क्षमा नहीं है वह अपनेमें और दूसरोंमें अनेक दोष पैदा करता है ॥ ५६ ॥

एको धर्मः परं श्रेयः क्षमैका शांतिरुत्तमा ।
विद्यैका परमा तृप्तिरहिंसैका सुखावहा ॥ ५७ ॥

( अन्वयः ) एकः, धर्मः, परं श्रेयः, एका, क्षमा, उत्तमा, शान्तिः, एका, विद्या, परमा, तृप्तिः, एका, अहिंसा, सुखावहा ॥ ५७ ॥

( सुबोधिनी ) एकः धर्मः=केवलं धर्म एव, परं=उत्कृष्टं 'श्रेयः=कल्याणं, एका क्षमा=केवला क्षमैव, उत्तमा, शान्तिः=अपूर्वशान्तिस्थानं, एका विद्या=केवला विद्यैव, परमा=उत्तमा, तृप्तिः=सन्तोषस्थानं, एका अहिंसा=केवला अहिंसैव, सुखमावहतीति, सुखावहा==सुखप्रदा ( भवतीति शेषः ) ॥ ५७ ॥

( हिन्दी ) राजन् ! धर्म परम कल्याण दाता है, क्षमा और विद्या परम शान्ति और तृप्ति देने वाली हैं अहिंसा ही सुख देती है ॥ ५७ ॥

द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ ५८ ॥

( अन्वयः ) सर्पः, बिलशयानिव, भूमिः अविरोद्धारं राजानं, अप्रवासिनं, ब्राह्मणं च इमौ द्वौ ग्रसते ॥ ५८ ॥

( सुबोधिनी ) सर्पः, बिले शेरते, तान् बिलशयान्=बिलस्थितान्, जीवान् इव, भूमिः=आश्रयभूमिः, अविरोद्धारं=संग्रामपराङ्मुखं, राजानं=नृपतिं, न प्रवसतीति तं=अप्रवासिनं=देशान्तरपर्यटनरहितं, ब्राह्मणं, च ग्रसते=निगिलति ॥ ५८ ॥

( हिन्दी ) जैसे सर्प अपने बिलमें सोने वाले दूसरे जीवोंको ग्रसता है उसी प्रकार यह भूमि भी रण विमुख राजा और प्रवासविमुख ब्राह्मणको ग्रसलेती है ॥ ५८ ॥

द्वे कर्मणी नरः कुर्वन्नस्मिंल्लोके विरोचते ।
अब्रुवन् परुषं किंचिदसतोऽनर्चयंस्तथा ॥ ५९ ॥

( अन्वयः ) अस्मिन्, लोके, नरः, द्वे, कर्मणी, कुर्वन्, विरोचते किंचित्, परुषं, अब्रुवन्, तथा, असतः, अनर्चयन्, च ॥ ५९ ॥

( सुबोधिनी ) अस्मिन्, लोके, नरः=जनः, द्वे कर्मणी,=कर्मद्वयं, कुर्वन्=विदधत्, विरोचते=शोभते, किंञ्चित्, परुषं=कटुवचनं न ब्रवीतीति अब्रुवन्=अभाषमाणः, तथा, असतः=दुर्जनान्, अनर्चयन्=अपूजयन्, च ॥ ५९ ॥

( हिन्दी ) इस संसार में वही मनुष्य प्रशंसा का पात्र बनता है जो कटु भाषण और दुर्जनों का आदर नहीं करता ॥ ५९ ॥

द्वाविमौ पुरुषव्याघ्र परप्रत्ययकारिणौ ।
स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः ॥६०॥

( अन्वयः ) हे पुरुषव्याघ्र ! कामितकामिन्यः, स्त्रियः, पूजितपूजकः, लोकः, इमौ, द्वौ, परप्रत्ययकारिणौ ( भवतः ) ॥ ६० ॥

( सुबोधिनी ) पुरुषेषु व्याघ्र इव, तत्संबोधने, हे पुरुषव्याघ्र ! हे पुरुषसिंह ! कामितं कामयन्ते कामितकामिन्यः=अन्याभिलषिताभिलाषिन्यः, स्त्रियः, पूजितं पूजयतीति पूजितपूजकः=अर्चितार्चनकरः, लोकः, इमौ=एतौ द्वौ, परप्रत्ययकारिणौ=परविश्वासोत्पादकौ ( भवत इति शेषः ) ॥ ६० ॥

( हिन्दी ) हे नरश्रेष्ठ ! दूसरोंके चाहे हुए पुरुषको चाहने वाली स्त्रियाँ और पूजितकी पूजाकरने वाले मूर्ख पुरुष ये दोनो दूसरोंको विश्वास कराने वाले होते हैं ॥ ६० ॥

द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषिणौ ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ ६१ ॥

( अन्वयः ) शरीरपरिशोषिणौ, इमौ, द्वौ, तीक्ष्णौ, कण्टकौ, यः, च, अधनः, कामयते, अनीश्वरः, च, कुप्यति ॥ ६१ ॥

( सुबोधिनी ) शरीरं परिशोषयत इति शरीरपरिशोषिणौ=शरीरनाशकौ, इमौ द्वौ, तीक्ष्णौ, कण्टकौ=शूलौ, यः, न धनमस्येत्यधनः=निर्धनः, कामयते=बह्वभिलषति, न ईशितुं शीलमस्येत्यनीश्वरः=असमर्थः च, कुप्यति=क्रुध्यति ॥ ६१ ॥

( हिन्दी ) ये दोनों शरीरको सुखाने वाले तीक्ष्ण कण्टक हैं, दरिद्र होकर भी ऊँची २ इच्छाएँ करना और असमर्थ होने हुए भी कोप करना ॥ ६१ ॥

द्वावेव न विराजेते विपरीतेन कर्मणा ।
गृहस्थश्च निरारंभः कार्यवांश्चैव भिक्षुकः ॥ ६२ ॥

( अन्वयः ) निरारम्भः, गृहस्थः, च, कार्यवान्, च, एव भिक्षुक द्वौ एव 'एतौ' विपरीतेन, कर्मणा, न, विराजेते ॥ ६२ ॥

( सुबोधिनी ) निरारम्भः=निर्व्यवसायी, गृहस्थः=गृहस्थाश्रमस्थः जनः, कार्यवान्=व्यवसायी, च, एव, भिक्षुकः=भिक्षाश्रितः, विपरीतेन=स्वधर्मप्रतिकूलेन, कर्मणा=व्यवसायेन, न, विराजेते=न शोभेते ॥ ६२ ॥

( हिन्दी ) निरुद्योगी गृहस्थ और उद्योग-धन्धेमें लगाहुआ भिक्षुक ये दोनों ही शोभा नहीं पाते ॥ ६२ ॥

**द्वाविमौ पुरुषौ राजन् स्वर्गस्योपरि तिष्ठतः ।**
**प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ ६३ ॥**

( अन्वयः ) हे राजन् ! क्षमया, युक्तः, प्रभुः, च, प्रदानवान्, दरिद्रश्च इमौ द्वौ पुरुषौ स्वर्गस्य, उपरि, तिष्ठतः ॥ ६३ ॥

( सुबोधिनी ) हे राजन्=हे धृतराष्ट्र ! क्षमया=क्षान्त्या, युक्तः=सहितः, प्रभुः=स्वामी, च, प्रकृष्टं दानमस्यास्तीति प्रदानवान्=दाता, दरिद्रः=दीनः च, इमौ, द्वौ, पुरुषौ, स्वर्गस्य=स्वर्गलोकस्य, उपरि, तिष्ठतः=निवसतः (स्वर्गसुखादप्यधिकं सुखमनुभवत इत्यर्थः)॥ ६३

( हिन्दी ) हे राजन् ! इस संसारमें समर्थ होकर क्षमाशील, और दान करने वाला दरिद्र ये दोनों स्वर्गके ऊपर रहते हैं अर्थात् स्वर्गसे भी अधिक सुखका अनुभव करते हैं ॥ ६३ ॥

**न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ।**
**अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ ६४ ॥**

( अन्वयः ) न्यायागतस्य, द्रव्यस्य, द्वौ, अतिक्रमौ, बोद्धव्यौ, अपात्रे, प्रतिपत्तिः, च पात्रे अप्रतिपादनं, च ॥ ६४ ॥

( सुबोधिनी ) न्यायादागतस्येति न्यायागतस्य=न्यायोपार्जितस्य, द्रव्यस्य=धनस्य, द्वौ=द्विप्रकारकौ, अतिक्रमौ,=दुरुपयोगौ बोद्धव्यौ=ज्ञेयौ, अपात्रे=अयोग्ये, प्रतिपत्तिः=दानं, च, पात्रे=दानयोग्ये, अप्रतिपादनं=असमर्पणं च ॥ ६४ ॥

( हिन्दी ) न्यायसे उपार्जित धनका दो प्रकारसे दुरुपयोग होता है, एकतो अपात्रको देनेसे और दूसरा दानयोग्य पुरुषको दान न देनेसे ॥

द्वावम्भसि निवेष्टव्यौ गले बद्ध्वा दृढां शिलाम् ।
धनवन्तमदातारं दरिद्रं चातपस्विनम् ॥ ६५ ॥

( अन्वयः ) गले, दृढां, शिलां, बद्ध्वा अदातारं, धनवन्तं, अतपस्विनं, दरिद्रं च, द्वौ, अम्भसि, निवेष्टव्यौ ॥ ६५ ॥

( सुबोधिनी ) गले=ग्रीवायां, दृढां=भारवतीं, शिलां=पाषाणशिलां, बद्ध्वा, न दातारमदातारं=अदानिनं, धनमस्यास्तीति तं धनवन्तं=ऐश्वर्यशालिनं, तपः अस्यास्तीति तपस्वी, स न भवतीति अतपयस्विनं=अतापसं, दरिद्रं=निर्धनं, च, द्वौ अम्भसि=जले, निवेष्टव्यौ=निपातयितव्यौ ॥ ६५ ॥

( हिन्दी ) धनी होते हुये भी जो दान न करे और दरिद्र होकर जो तप न करे, ऐसे आदमीको गलेमें शिला बाँधकर जलमें डुबो देना चाहिये ॥ ६५ ॥

द्वाविमौ पुरुषव्याघ्र सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥ ६६ ॥

(अन्वयः) हे पुरुषव्याघ्र ! योगयुक्तः परिव्राट्, च, रणे, अभिमुखः, हतः, च, इमौ द्वौ, सूर्यमंडलभेदिनौ, ( भवतः ) ॥ ६६ ॥

( सुबोधिनी ) पुरुषेषु व्याघ्र इव, तत्सम्बुद्धौ हे पुरुषव्याघ्र! = हे पुरुषसिंह ! योगेन, युक्तः योगयुक्तः = योगाभ्यासी, परिव्रजतीति परिव्राट् = सन्यासी, च, रणे = संग्रामे अभिमुखः = शत्रुसम्मुख इत्यर्थं = युद्ध्वा, हतः = मृतः, इमौ द्वौ सूर्यमण्डलं भिन्त इति सूर्यमण्डलभेदिनौ = रविमंडलविदारकौ ( भवत इति शेषः ) ॥ ६६ ॥

(हिन्दी) हे धृतराष्ट्र ! योगाभ्यासी सन्यासी और रणमें शत्रुकेसम्मुख लड़कर मरा हुआ पुरुष ये दोनों सूर्यमंडलको भेदकर स्वर्ग जाते हैं॥ ६६॥

त्रयोपाया मनुष्याणां श्रूयन्ते भरतर्षभ ।
कनीयान्मध्यमः श्रेष्ठ इति वेदविदो विदुः ॥ ६७ ॥

( अन्वयः ) हे भरतर्षभ ! मनुष्याणां, त्रयः, उपायाः, श्रूयन्ते, कनीयान, मध्यमः, श्रेष्ठः, इति, वेदविदः, विदुः ॥ ६७ ॥

( सुबोधिनी ) हे भरतर्षभ ! = हे भरतश्रेष्ठ ! मनुष्याणां, त्रयः = त्रिप्रकारकाः, उपायाः, श्रूयन्ते, कनीयान् = कनिष्ठः ( युद्धमित्यर्थः ) मध्यमः ( भेदश्च दानंचेत्यर्थः ), श्रेष्ठः = उत्तमः ( साम इत्यर्थः ) इति, वेदं विन्दन्तीति वेदविदः = वेदज्ञाः, विदुः = जानन्ति ॥ ६७ ॥

( हिन्दी ) हे धृतराष्ट्र ! नीति जानने वालोंने श्रेष्ठ मध्यम और कनिष्ट आजतक तीन प्रकारकी नीतियाँ कही हैं, ( साम-श्रेष्ठ, भेद और दान मध्यम और दण्ड अधम हैं ॥ ६७ ॥

त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः ।
नियोजयेद्यथावत्तां स्त्रिविधेष्वेव कर्मसु ॥ ६८ ॥

( अन्वयः ) हे राजन् ! पुरुषाः, उत्तमाधममध्यमाः, त्रिविधाः, ( भवन्ति ), त्रिविधेषु, एव कर्मसु, यथावत् तान्, नियोजयेत् ॥ ६८ ॥

( सुबोधिनी ) हेराजन् = हे धृतराष्ट्र! पुरुषाः = मानवाः, उत्तमाश्च अधमाश्च = मध्यमाश्चेत्युत्तमाधममध्यमाः = एवं प्रकाराः त्रिविधाः = त्रिप्रकाराः, ( भवन्तीति शेषः ) त्रिविधेषु एव कर्मसु = उत्तमाधममध्य-मेष्वेवकर्मसु, यथावत = यथायोग्यं, तान् = त्रिविधान् नरान्, नियोजयेत् = नियोगं कुर्यात ॥ ६८ ॥

( हिन्दी ) हे राजन् ! इस संसारमें उत्तम, मध्यम और अधम तीन प्रकारके मनुष्य होते हैं इसलिये उन्हें उनकी श्रेणीके अनुसार उत्तम, मध्यम और अधम इन तीन प्रकारके कर्मों में लगाना चाहिये ॥ ६८ ॥

त्रय एवाधना राजन् भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ ६९ ॥

( अन्वयः ) हे राजन् ! भार्या, दासः, तथा, सुतः, त्रयः एव, अधनाः ( सन्ति ), ते यत् समधिगच्छन्ति, यस्य, ते, ( भवन्ति ) तस्य तद् धनं, भवति ॥ ६९ ॥

( सुबोधिनी ) हे राजन् !, भार्या=पत्नी, दासः=सेवकः, तथा सुतः =पुत्रः, त्रयः, एव, अधनाः=निर्धनाः=( सन्तीतिशेषः ) ते= भार्यादयः, यद्=यद्धनं, समधिगच्छन्ति=प्राप्नुवन्ति, यस्य=यस्य स्वामिनः, ते=भार्यादयः ( भवन्तीति शेषः ) तस्य, तद्=धनं भवति ॥ ६९ ॥

( हिन्दी ) हे राजन् ! स्वामी आदिके विद्यमान रहने पर तीन अधन होते हैं—भार्या दास और पुत्र । ये तीनों जो भी कुछ लाभ करते हैं उसके अधिकारी पति मालिक और पिता ही क्रमसे होते हैं । अर्थात्— आप राज्यके मालिक हैं आपको अधिकार है कि आप अपने पुत्रोंसे पाण्डवोंको राज्य दिला दें ॥ ६९ ॥

हरणं च परस्वानां परदाराभिमर्शनम् ।
सुहृदश्च परित्यागस्त्रयो दोषाः क्षयावहाः ॥ ७० ॥

( अन्वयः ) परस्वानां, हरणं, परदाराभिमर्शनं, च सुहृदः, च, परित्यागः, ( इमे ) त्रयः, दोषाः, क्षयावहाः ( भवन्ति ) ॥ ७० ॥

( सुबोधिनी ) परस्वानां=परद्रव्याणां, हरणं, परदाराणां अभिमर्शनं परदाराभिमर्शनं=परस्त्रीसंगमः, च, सुहृदः=मित्रस्य च, परित्यागः= बहिष्कारः, ( इम इति शेषः ) त्रयः, पूर्वोक्ताः, दोषाः, क्षयमावहन्तीति क्षयावहाः=क्षयकारकाः, ( भवन्तीति शेषः ) ॥ ७० ॥

( हिन्दी ) इस लोकमें, परद्रव्यहरण, परस्त्रीगमन और सन्मित्रका त्याग, यह तीन प्रकारका दोष सर्व संहारकारी होता है ॥ ७१ ॥

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ ७१ ॥

( अन्वयः ) आत्मनः, नाशनं, नरकस्य, इदं, त्रिविधं द्वारं, कामः, क्रोधः, तथा, लोभः, तस्माद्, एतत् त्रयं, त्यजेत् ॥ ७१ ॥

( सुबोधिनी ) आत्मनः = स्वस्य, नाशनं = हानिकरं, नरकस्य इदं = वक्ष्यमाणं, त्रिविधं = त्रिप्रकारकं, द्वारं = प्रवेशमार्गः, कामः, क्रोधः, तथा, लोभः, तस्मात् = तस्माद्धेतोः, एतत् त्रयं—त्रयोऽवयवाः अस्य तत् त्रयं = कामादिकमित्यर्थः, त्यजेत् = जह्यात् ॥ ७१ ॥

( हिन्दी ) काम, क्रोध और लोभ ये तीनों आत्मविनाशके कारण तथा नरकके द्वार हैं इसलिये इन तीनोंको छोड़ देना चाहिये ॥ ७१ ॥

वरप्रदानं राज्यं च पुत्रजन्म च भारत ! ।
शत्रोश्च मोक्षणं कृच्छ्रात्त्रीणि चैकं च तत्समम् ॥७२॥

( अन्वयः ) हे भारत ! वरप्रदानं, राज्यं, च, पुत्रजन्म च, त्रीणि, शत्रोः, कृच्छ्रात्, मोक्षणं, 'इदमेकमेव' च तत्समं ( भवति ) ॥ ७२ ॥

( सुबोधिनी ) वरस्य प्रदानं वरप्रदानं = वरदानं, राज्यं = राज्य-प्राप्तिः, पुत्रस्य जन्म पुत्रजन्म = पुत्रलाभः, च, त्रीणि = एतानि त्रीणि, आनन्ददायीनि वर्तन्ते, परन्तु, शत्रोः = वैरिणः, कृच्छ्रात् = दुःखात्, मोक्षणं मोचनं, 'इदमेकमेव', तत्समं = वरप्रदानादितुल्यं, (भवतीति शेषः)॥७२॥

( हिन्दी ) हे धृतराष्ट्र ! वरदान राज्यप्राप्ति और पुत्रजन्म ये तीनोंही आनन्ददायक हैं परन्तु शत्रुके कष्टसे छूटना यह एकही उन तीनोंके आनन्दके बराबर है ॥ ७२ ॥

भक्तं च भजमानं च तवास्मीति च वादिनम् ।
त्रीनेताञ्छरणं प्राप्तान्विषमेऽपि न संत्यजेत् ॥ ७३ ॥

( अन्वयः ) भक्तं, भजमानं, ( अहम् ) तव, अस्मि, इति वादिनं, एतान् शरणं प्राप्तान् त्रीन् विषमेऽपि न संत्यजेत् ॥ ७३ ॥

( सुबोधिनी ) भक्तं, भजत इति भजमानः तं=सेवकं, तव,=भवतः, अस्मि ( अहमितिशेषः ) इति=एवं, वादिनं=ब्रुवन्तं, शरणं प्राप्तान्=शरणागतान्, एतान्, त्रीन्=त्रिसंख्याकान्, विषमेऽपि=संकटेऽपि, न संत्यजेत्=न जह्यात् ॥ ७३ ॥

( हिन्दी ) भक्त, भृत्य और "मैं आप ही का हूँ" ऐसा कहने वाले तीनोंको उनकी महाविपत्तिमें भी यदि वे शरण आजायँ तो सहायता करे, छोड़े नहीं ॥ ७३ ॥

चत्वारि राज्ञा तु महाबलेन वर्ज्यान्याहुः पण्डितस्तानि विद्यात्।
अल्पप्रज्ञैः सह मन्त्रं न कुर्यान्नदीर्घसूत्रैः रभसैश्चारणैश्च॥७४॥

( अन्वयः ) महाबलेन, राज्ञा, तु, चत्वारि, वर्ज्यानि ( नयज्ञाः ) आहुः, पण्डितः, तानि, विद्यात्, अल्पप्रज्ञैः, दीर्घसूत्रैः, रभसैः, चारणैः, च, सह मन्त्रं न ( कुर्यात् ) ॥ ७४ ॥

( सुबोधिनी ) महद् बलमस्येति, तेन, महाबलेन=बलवता, राज्ञा, चत्वारि, वर्ज्यानि=त्याज्यानि, आहुः=कथयामासुः, नयज्ञा इतिशेषः, पण्डितः, तानि, विद्यात्=जानीयात् अल्पा प्रज्ञा येषान्तैरल्पप्रज्ञैः=अल्पमतिभिः, दीर्घसूत्रैः=स्वल्पसमयसम्पाद्यमपि कार्यं बहु समयेन निष्पादयद्भिः, रभसैः=हर्षतरलैः ( विचारशून्यैरित्यर्थः ) च, चारणैः=बन्दिभिः च, सह=साकं, मन्त्रं न कुर्यात्=न मन्त्रयेत् ॥ ७४ ॥

( हिन्दी ) राजन्! पण्डितको यह समझ रखना चाहिये कि महाबली राजा निम्नलिखित चार पुरुषोंके साथ कभी मंत्रणा न करे—थोड़ी समझ वाला हो, जल्दीके काममें देर लगाने वाला हो, उतावला हो, और जो बन्दी हो ॥ ७४ ॥

चत्वारि ते तात गृहे वसन्तु श्रियाभिजुष्टस्य गृहस्थधर्मे ।
वृद्धो ज्ञातिरवसन्नः कुलीनः सखा दरिद्रो भगिनी चानपत्या॥

( अन्वयः ) हे तात ! गृहस्थधर्मे, श्रिया, अभिजुष्टस्य, ते, गृहे, वृद्धः ज्ञातिः, अवसन्नः, कुलीनः दरिद्रः सखा, अनपत्या भगिनी, च एतानि, चत्वारि वसन्तु ॥ ७५ ॥

( सुबोधिनी ) हे तात !=धृतराष्ट्र ! गृहस्थधर्मे=गृहस्थाश्रमे, श्रिया=राजलक्ष्म्या, अभिजुष्टस्य=युक्तस्य, ते=तव, गृहे, वृद्धः ज्ञातिः =स्वज्ञातिवृद्धः, अवसन्नः=विपद्ग्रस्तः, कुलीनः=सज्जनः, दरिद्रः= निर्धनः, सखा=सुहृद्, अनपत्या=सन्तानहीना, भगिनी, च एतानि, चत्वारि वसन्तु, ( वृद्धः कुलधर्मानुपदिशति, कुलीनः, शिशून् आचारं ग्राहयति, सखा हितं वदति, भगिनी गृहकृत्यानि सम्पादयति) इत्यर्थः॥

( हिन्दी ) हे तात ! लक्ष्मी युक्त आपके घरमें वृद्ध कुटुम्बी, दुःखी कुलीन, दरिद्र सखा और संतान रहित बहिन निवास करे क्योंकि वृद्ध जाति वाला कुल धर्मोंका उपदेश करता है, कुलीन व्यक्ति बच्चोंको सदाचार सिखाता है, दरिद्र मित्र हितकी बात कहता है और बहन सन्तान रहित होनेके कारण गृहकार्योंका भलीप्रकार देखभाल किया करती है ॥

चत्वार्याह महाराज साद्यस्कानि बृहस्पतिः ।
पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे ॥ ७६ ॥

( अन्वयः ) हे महाराज ! बृहस्पतिः, पृच्छते, त्रिदशेन्द्राय, चत्वारि, साद्यस्कानि, आह, तानि, इमानि, मे, निबोध ॥ ७६ ॥

( सुबोधिनी ) हे महाराज ! बृहस्पतिः=एतन्नामा देवगुरुः, पृच्छतीति तस्मै पृच्छते=प्रश्नकर्त्रे, त्रिदशेन्द्राय=देवेन्द्राय, चत्वारि, साद्यस्कानि=सफलानि, आह, तानि, इमानि=वक्ष्यमाणानि, मे=मम (मत्त इत्यर्थः) निबोध=जानीहि ॥ ७६ ॥

( हिन्दी ) हे महाराज ! देवगुरु बृहस्पतिने इन्द्रके पूछनेपर चार तत्काल फलवाली बातोंको कहा है वह मुझसे, समझ लो ॥ ७६ ॥

देवतानां च संकल्पमनुभावं च धीमताम् ।
विनयं कृतविद्यानां विनाशं पापकर्मणाम् ॥ ७७ ॥

( अन्वयः ) देवतानां सङ्कल्पं, च, धीमताम् अनुभावं, च, कृत-विद्यानां विनयं, पापकर्मणां विनाशं चेति ( जानीहि ) ॥ ७७ ॥

( सुबोधिनी ) देवतानां = स्वर्गस्थदेवानां, संकल्पं = इच्छां, धीमतां = बुद्धिमतां, अनुभावं = प्रभावं, च, कृता विद्या यैस्तेषां कृतविद्यानां = विद्यावतां, विनयं = नम्रतां, पापकर्मणां = पापिनां, विनाशं च ( जानीहीति शेषः ) ॥ ७७ ॥

( हिन्दी ) स्वर्गवासी देवताओंका संकल्प, बुद्धिमान तेजस्वियोंका प्रभाव, कृतविद्यका विनय और पाप कर्म करनेवालोंका विनाश ॥ ७७ ॥

चत्वारि कर्माण्यभयंकराणि भयं प्रयच्छन्त्ययथाकृतानि ।
मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः ॥ ७८ ॥

( अन्वयः ) चत्वारि कर्माणि, अभयंकराणि (भवन्ति), (तान्येव) अयथाकृतानि, भयं, प्रयच्छन्ति, मानाग्निहोत्रं, उत, मानमौनं, मानेन, अधीतं, उत, मानयज्ञः ॥ ७८ ॥

( सुबोधिनी ) चत्वारि = चतुर्विधानि, कर्माणि अभयं कुर्वन्तीति अभयंकराणि = निर्भयकारीणि ( भवन्तीति शेषः ) ( तान्येवेति शेषः ) अयथाकृतानि = नीतिविरुद्धसम्पादितानि, भयं = भीतिं, प्रयच्छन्ति = ददति, मानेनाग्निहोत्रं मानाग्निहोत्रं = विधिपूर्वकमग्निहोत्रं, मानेन मौनं मानमौनं = विधिवन्मौनधारणं, मानेन = विधिना, अधीतं = अध्ययनं, मानेन यज्ञो मानयज्ञः = विधिवद्यज्ञकरणम् ॥ ७८ ॥

( हिंदी ) हे राजन् ! चार कामोंके करनेसे मनुष्य निर्भय रहता है परन्तु येही चार बातें अनुचित रीति पर करनेसे भयके कारण बन जाती हैं वे कर्म ये हैं—विधिपूर्वक यज्ञ करना, विधिपूर्वक मौनधारण करना, विधिपूर्वक अध्ययन करना और विधिसे अग्निहोत्र करना ॥ ७८ ॥

पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः ।
पिता माताग्निरात्मा च गुरुश्च भरतर्षभ ॥ ७९ ॥

( अन्वयः ) हे तात ! गृहस्थधर्मे, श्रिया, अभिजुष्टस्य, ते, गृहे, वृद्धः ज्ञातिः, अवसन्नः, कुलीनः दरिद्रः सखा, अनपत्या भगिनी, च एतानि, चत्वारि वसन्तु ॥ ७५ ॥

( सुबोधिनी ) हे तात !=धृतराष्ट्र ! गृहस्थधर्मे=गृहस्थाश्रमे, श्रिया=राजलक्ष्म्या, अभिजुष्टस्य=युक्तस्य, ते=तव, गृहे, वृद्धः ज्ञातिः =स्वज्ञातिवृद्धः, अवसन्नः=विपद्ग्रस्तः, कुलीनः=सज्जनः, दरिद्रः= निर्धनः, सखा=सुहृत्, अनपत्या=सन्तानहीना, भगिनी, च एतानि, चत्वारि वसन्तु, ( वृद्धः कुलधर्मानुपदिशति, कुलीनः, शिशून् आचारं ग्राहयति, सखा हितं वदति, भगिनी गृहकृत्यानि सम्पादयति) इत्यर्थः ॥

( हिन्दी ) हे तात ! लक्ष्मी युक्त आपके घरमें वृद्ध कुटुम्बी, दुःखी कुलीन, दरिद्र सखा और संतान रहित बहिन निवास करे क्योंकि वृद्ध जाति वाला कुल धर्मोंका उपदेश करता है, कुलीन व्यक्ति बच्चोंको सदाचार सिखाता है, दरिद्र मित्र हितकी बात कहता है और बहन सन्तान रहित होनेके कारण गृहकार्योंका भलीप्रकार देखभाल किया करती है ॥

चत्वार्याह महाराज साद्यस्कानि बृहस्पतिः ।
पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे ॥ ७६ ॥

( अन्वयः ) हे महाराज ! बृहस्पतिः, पृच्छते, त्रिदशेन्द्राय, चत्वारि, साद्यस्कानि, आह, तानि, इमानि, मे, निबोध ॥ ७६ ॥

( सुबोधिनी ) हे महाराज ! बृहस्पतिः=एतन्नामा देवगुरुः, पृच्छतीति तस्मै पृच्छते=प्रश्नकर्त्रे, त्रिदशेन्द्राय=देवेन्द्राय, चत्वारि, साद्यस्कानि=सफलानि, आह, तानि, इमानि=वक्ष्यमाणानि, मे=मम (मत्त इत्यर्थः) निबोध=जानीहि ॥ ७६ ॥

( हिन्दी ) हे महाराज ! देवगुरु बृहस्पतिने इन्द्रके पूछनेपर चार तत्काल फलवाली बातोंको कहा है वह मुझसे, समझ लो ॥ ७६ ॥

देवतानां च संकल्पमनुभावं च धीमताम् ।
विनयं कृतविद्यानां विनाशं पापकर्मणाम् ॥ ७७ ॥

( अन्वयः ) देवतानां सङ्कल्पं, च, धीमताम् अनुभावं, च, कृत-विद्यानां विनयं, पापकर्मणां विनाशं चेति ( जानीहि ) ॥ ७७ ॥

( सुबोधिनी ) देवतानां = स्वर्गस्थदेवानां, संकल्पं = इच्छां, धीमतां = बुद्धिमतां, अनुभावं = प्रभावं, च, कृता विद्या यैस्तेषां कृतविद्यानां = विद्यावतां, विनयं = नम्रतां, पापकर्मणां = पापिनां, विनाशं च ( जानीहीति शेषः ) ॥ ७७ ॥

( हिन्दी ) स्वर्गवासी देवताओंका संकल्प, बुद्धिमान तेजस्वियोंका प्रभाव, कृतविद्यका विनय और पाप कर्म करनेवालोंका विनाश ॥ ७७ ॥

चत्वारि कर्माण्यभयंकराणि भयं प्रयच्छन्त्ययथाकृतानि ।
मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः ॥ ७८ ॥

( अन्वयः ) चत्वारि कर्माणि, अभयंकराणि (भवन्ति), (तान्येव) अयथाकृतानि, भयं, प्रयच्छन्ति, मानाग्निहोत्रं, उत, मानमौनं, मानेन, अधीतं, उत, मानयज्ञः ॥ ७८ ॥

( सुबोधिनी ) चत्वारि = चतुर्विधानि, कर्माणि अभयं कुर्वन्तीति अभयंकराणि = निर्भयकारीणि ( भवन्तीति शेषः ) ( तान्येवेति शेषः ) अयथाकृतानि = नीतिविरुद्धसम्पादितानि, भयं = भीतिं, प्रयच्छन्ति = ददति, मानेनाग्निहोत्रं मानाग्निहोत्रं = विधिपूर्वकमग्निहोत्रं, मानेन मौनं मानमौनं = विधिवन्मौनधारणं, मानेन = विधिना, अधीतं = अध्ययनं, मानेन यज्ञो मानयज्ञः = विधिवद्यज्ञकरणम् ॥ ७८ ॥

( हिंदी ) हे राजन् ! चार कामोंके करनेसे मनुष्य निर्भय रहता है परन्तु येही चार बातें अनुचित रीति पर करनेसे भयके कारण बन जाती हैं वे कर्म ये हैं—विधिपूर्वक यज्ञ करना, विधिपूर्वक मौनधारण करना, विधिपूर्वक अध्ययन करना और विधिसे अग्निहोत्र करना ॥ ७८ ॥

पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः ।
पिता माताग्निरात्मा च गुरुश्च भरतर्षभ ॥ ७९ ॥

( अन्वयः ) हे भरतर्षभ! मनुष्येण, पंचाग्नयः, पिता, माता, अग्निः, आत्मा, गुरुः, च, प्रयत्नतः परिचर्याः ॥ ७९ ॥

( सुबोधिनी ) हे भरतर्षभ, मनुष्येण, पंच अग्नयः पंचाग्नयः—पिता, माता, अग्निः, आत्मा, गुरुः च प्रयत्नतः = यत्नेन, परिचर्याः = सेव्याः ( गृहाग्निवत् सर्वदा पूज्या इत्यर्थः ) ॥ ७९ ॥

( हिन्दी ) हे भरतश्रेष्ठ! माता, पिता, गुरु, गृहकी अग्नि और आत्मा ये पांच अग्नि हैं, मनुष्यको इनकी यत्न पूर्वक सेवा करनी चाहिये ॥७९॥

पञ्चैव पूजयंल्लोके यशः प्राप्नोति केवलम् ।
देवान्पितॄन्मनुष्यांश्च भिक्षूनतिथिपञ्चमान् ॥ ८० ॥

( अन्वयः ) लोके, केवलं, पंच एव देवान्, पितॄन्, मनुष्यान्, भिक्षून्, अतिथिपञ्चमान्, च पूजयन्, यशः प्राप्नोति ॥ ८० ॥

( सुबोधिनी ) लोके = संसारे, केवलं, पंच एव, देवान्, पितॄन्, अग्निष्वात्तादिपितॄन्, मनुष्यान्, जीवतो मातृपित्रादीन्, भिक्षून् = भिक्षुकान्, अतिथिरेव पञ्चमः अतिथिपञ्चमस्तान् अतिथिपञ्चमान् = अतिथीन्, च, पूजयन् = सत्कुर्वन्, यशः = कीर्तिं, प्राप्नोति = लभते ॥ ८० ॥

( हिन्दी ) इससंसारमें केवल देवता, पितर, मनुष्य, भिक्षुक और अतिथिका सत्कार करनेसे मनुष्य विपुल यश प्राप्त करता है ॥ ८० ॥

पञ्च त्वानुगमिष्यन्ति यत्र यत्र गमिष्यसि ।
मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ॥ ८१ ॥

( अन्वयः ) 'हे राजन्'! यत्र, यत्र, गमिष्यसि, मित्राणि, अमित्राः, मध्यस्थाः, उपजीव्योपजीविनः, 'इमे' पञ्च त्वा, अनुगमिष्यन्ति ॥ ८१ ॥

( सुबोधिनी ) यत्र यत्र, (त्वमिति शेषः) गमिष्यसि, (तत्रतत्रेति शेषः) मित्राणि = सखायः, अमित्राः = शत्रवः, मध्ये तिष्ठन्तीति मध्यस्थाः = शत्रुमित्रोभयभिन्नाः, (उदासीना इत्यर्थः) उपजीव्यश्चोपजीविनश्चो-

पजीव्योपजीविनः = आश्रयदातारः, आश्रिताश्च, त्वा = त्वां, अनुगमिष्यन्ति = अनुचरिष्यन्ति ॥ ८१ ॥

( हिन्दी ) हे राजन् ! जहाँ २ तुम जावोगे वहाँ २ ये पाँचो तुम्हारे पीछे लगे रहेंगे, मित्र, शत्रु, उदासीन, उपजीव्य (गुरुजन) और उपजीवी ( आश्रित ) ॥ ८१ ॥

पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम् ।
ततोऽस्य स्रवति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ ८२ ॥

( अन्वयः ) पञ्चेन्द्रियस्य, मर्त्यस्य, एकं, इन्द्रियं, छिद्रं, चेत्, ततः, अस्य प्रज्ञा दृतेः, पात्रात् उदकम्, इव स्रवति ॥ ८२ ॥

(सुबोधिनी) पञ्च इन्द्रियाणि यस्य तस्य पञ्चेन्द्रियस्य = पञ्चेन्द्रियवतः, मर्त्यस्य = नरस्य, एकं (एकमपीत्यर्थः) इन्द्रियं = ईश्वरसृष्टज्ञानकर्मसाधनं छिद्रं = दोषयुक्तं, चेत् = यदि (तर्हीति शेषः) ततः = अनन्तरं, अस्य = नरस्य, प्रज्ञा = बुद्धिः, दृतेः = चर्ममयात् पात्रात्, उदकम् = जलं, इव, स्रवति = च्युता भवति ॥ ८२ ॥

( हिन्दी ) पांच इन्द्रिय वाले मनुष्यकी एक भी इन्द्रियमें यदि दोष आजाय अर्थात् वह तदासक्त बन जाय तो उसकी बुद्धि इस प्रकार नष्ट होजाती है जैसे फटी हुई मशकसे पानी ॥ ८२ ॥

षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ७८ ॥

( अन्वयः ) इह भूतिम् इच्छता पुरुषेण निद्रा, तन्द्रा, भयं क्रोधः, आलस्यं, दीर्घसूत्रता इति षड् दोषा हातव्याः ॥ ८३ ॥

( सुबोधिनी ) इह = अस्मिल्लोके, भूतिं = कल्याणं, इच्छता = अभिलषता, पुरुषेण = नरेण, निद्रा, तन्द्रा, भयं, क्रोधः, आलस्यं, दीर्घसूत्रिणो भावो दीर्घसूत्रता, इति षड्, दोषाः, हातव्याः = त्यक्तव्याः ॥ ८३ ॥

( हिन्दी ) इस लोकमें आकर यदि मनुष्य अपना कल्याण चाहे तो

निद्रा, तन्द्रा, भय, क्रोध, आलस्य और दीर्घसूत्रता अर्थात् जल्दीके काममें देर लगानेकी आदतको छोड़ दे ॥ ८३ ॥

षडिमान् पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ८४ ॥
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥ ८५ ॥

( अन्वयः ) पुरुषः, अर्णवे, भिन्नां, नावमिव अप्रवक्तारम् आचार्यं, अनधीयानम् ऋत्विजं अरक्षितारं राजानं, अप्रियवादिनीम् भार्याम्, ग्रामकामं गोपालं, वनकामं नापितं, इमान्, षट्, ( दोषान् ) जह्यात् ॥

( सुबोधिनी ) पुरुषः, अर्णवे = सागरे, भिन्नां = त्रुटितां, नावमिव = नौकामिव, अप्रवक्तारं = अवचनपटुं, आचार्यं = शिक्षयितारं, अनधीयानं = अपठनशीलं, ऋत्विजं = होतारं, अरक्षितारं = अपालकं, राजानं = भूपालं, न प्रियं वदतीति तां अप्रियवादिनीं = कटुभाषिणीं, भार्यां = पत्नीं, ग्रामं कामयत इति तं ग्रामकामं = ग्राममिच्छन्तं, गोपालं = आभीरं, वनं कामयत इति तं वनकामं = वनम् इच्छन्तं, नापितं च, जह्यात् = त्यजेत् ॥

( हिन्दी ) ज्ञान और हितका उपदेश न करने वाले आचार्यको, अपढ़ पुरोहितको रक्षा न करने वाले राजाको अप्रिय वचन बोलने वाली भार्याको, गोपालनके लिये वनमें न रहकर बस्तीमें रहने वाले अहीरको और बस्तीमें अपना काम न कर वनमें रहने वाले नाईको उसी तरह छोड़ देना चाहिये जैसे समुद्रमें टूटी नौकाको लोग छोड़ देते हैं ॥ ८४ ॥ ८५ ॥

षडेव तु गुणाः पुंसा न हातव्याः कदाचन ।
सत्यं दानमनालस्यमनसूया क्षमा धृतिः ॥ ८६ ॥

( अन्वयः ) पुंसा, सत्यं दानं, अनालस्यं अनसूया, क्षमा, धृतिः, एते षट् गुणाः कदाचन न हातव्याः ॥ ८६ ॥

( सुबोधिनी ) पुंसा = नरेण, सत्यं, दानं, अनालस्यं, अनसूया =

गुणेषु दोषाविष्करणाभावः, क्षमा, धृतिः = धैर्यं, एते, षट्, गुणाः, कदाचन = संकटेऽपीत्यर्थः, न हातव्याः = न त्याज्याः ॥ ८६ ॥

( हिन्दी ) मनुष्यका कर्त्तव्य है कि वह सत्य, दान, अनालस्य, दूसरोंके गुणोंके सम्बन्धमें दोषोंका न प्रगट करना क्षमा और धैर्य आदि गुण कभी न छोड़ें ॥ ८६ ॥

**अर्थागमो नित्यमरोगिता च प्रिया च भार्या प्रियवादिनी च।**
**वश्यश्च पुत्रोऽर्थकरी च विद्या षड् जीवलोकस्य सुखानि राजन्॥**

( अन्वयः ) हे राजन् ! अर्थागमः, नित्यम् अरोगिता, च, प्रियवादिनी, प्रियाच, भार्या, वश्यः पुत्र, च, अर्थंकरी, विद्या च जीवलोकस्य, 'एतानि' षट्, सुखानि ( सन्ति ) ॥ ८७ ॥

( सुबोधिनी ) हे राजन् ! अर्थस्यागमोऽर्थागमः = धनप्राप्तिः, नित्यं, न वर्तते रोगोऽस्यारोगी, तस्य भावोऽरोगिता = स्वास्थ्यं, प्रियवादिनी = मधुरभाषिणी, प्रिया = प्रियकरी, भार्या, वशं गतः वश्यः = विनम्रः, पुत्रः, अर्थं करोतीति अर्थंकरी, धनदा, विद्या, च जीवलोकस्य = मर्त्यलोकस्य, 'एतानि' षट्, सुखानि = सुखसाधनानि, वर्तन्ते ॥ ८७ ॥

( हिन्दी ) हे राजन् इस मर्त्यलोकमें ६ वस्तु सुख देने वाली हैं, धनप्राप्ति, स्वास्थ्यरक्षा, प्रीतिको देने वाली और मधुरभाषिणी भार्या, विनय सम्पन्न पुत्र और धन देने वाली विद्या ॥ ८७ ॥

**षण्णामात्मनि नित्यानामैश्वर्यं योऽधिगच्छति ।**
**न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥ ८८ ॥**

( अन्वयः ) यः, आत्मनि, नित्यानां, षण्णाम्, ऐश्वर्यं, अधिगच्छति, सः, विजितेन्द्रियः, पापैः, न, युज्यते, अनर्थैः, कुतः ! (युज्यते)॥

( सुबोधिनी ) यः आत्मनि = स्वशरीरे, नित्यानां = नित्यस्थितानां, षण्णाम् = ज्ञानेन्द्रियाणाम् मनसश्च, ईशितुं शीलमस्येश्वरस्तस्य भाव ऐश्वर्यं = सामर्थ्यं, अधिगच्छति = प्राप्नोति, एतानि स्ववशे स्थापयतीत्यर्थः,

विजितानि,इन्द्रियाणि येन सः विजितेन्द्रियः = वशीकृतेन्द्रियः, सः पापैः न युज्यते = न लिप्यते, अनर्थैः = अनिष्टकरैः, 'तु' कुतः न कुत्रापीत्यर्थः, ( युज्यते )॥ ८८ ॥

( हिन्दी ) जिस आदमीनें अपने ज्ञानेन्द्रिय और मनको वशमें कर लिया है वह सब प्रकारके अनिष्ट और पापोंसे बच सकता है ॥ ८८ ॥

षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते ।
चौराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः ॥८९॥

प्रमदाः कामयमानेषु यजमानेषु याजकाः ।
राजा विवदमानेषु नित्यं मूर्खेषु पण्डिताः ॥ ९० ॥

( अन्वयः ) इमे, षट्, षट्सु, जीवन्ति, सप्तमः, न उपलभ्यते, चौराः, प्रमत्ते, चिकित्सकाः व्याधितेषु, प्रमदाः कामयमानेषु, याजकाः यजमानेषु, राजा विवदमानेषु, पण्डिताः मूर्खेषु नित्यं जीवन्ति ॥ ८९॥९०॥

( सुबोधिनी ) इमे, षट् = चौरादयः, षट्सु = प्रमत्तादिषु, जीवन्ति, निर्वहन्ति, सप्तमः = पञ्चितरः, न उपलभ्यते = दृश्यते, चौराः, प्रमत्तेषु = अनवहितेषु, चिकित्सकाः = वैद्याः, व्याधितेषु = रोगग्रस्तेषु, प्रमदाः = स्त्रियः कामयन्त इति कामयमानास्तेषु = कामिषु, याजकाः = ऋत्विजः, यजमानेषु, राजा = भूपः, विवदन्त इति तेषु विवदमानेषु = अन्योन्यं विवादं कुर्वत्सु, पण्डिताः, मूर्खेषु, जीवन्ति = जीविकां लभन्ते ॥ ८९ ॥ ॥ ९० ॥

( हिन्दी ) चौरादि छ प्रमत्तादि छमें अपनी जीविका कमाते हैं अर्थात् चौर सावधान न रहने वालोंमें, वैद्य रोगीमें, मदोन्मत्त स्त्री कामीजनमें, यज्ञकराने वाले यज्ञकरने वालोंमें, राजा परस्पर झगड़ा करनेवालोंमें और पंडित मूर्खों में ॥ ८९ ॥ ९० ॥

षडिमानि विनश्यन्ति मुहूर्तमनवेक्षणात् ।
गावः सेवा कृषिर्भार्या विद्यावृषलसङ्गतिः ॥ ९१ ॥

( अन्वयः ) गावः, सेवा, कृपिः, भार्या, विद्या, वृषलसंगतिः, इमानि, षट्, मुहूर्त्तं, अनवेक्षणाद् विनश्यन्ति ॥ ९१ ॥

( सुबोधिनी ) गावः, सेवा, कृषिः, भार्या; विद्या, वृषलस्य संगतिः वृषलसंगतिः = शूद्रसंगतिः, इमानि, षट्, मुहूर्त्तं = क्षणमात्रं, 'अपि' अनवेक्षणात् = अनवलोकनात्, विनश्यन्ति ॥ ९१ ॥

( हिन्दी ) गौ, सेवा, खेती, भार्या, विद्या और शूद्रकी संगति ये छ चीजें तनिकसी लापरवाहीसे ही नष्ट हो जाती हैं ॥ ९१ ॥

षडेते ह्यवमन्यन्ते नित्यं पूर्वोपकारिणम्।
आचार्यं शिक्षिताः शिष्याः कृतदाराश्च मातरम्॥९२॥
नारीं विगतकामास्तु कृतार्थाश्च प्रयोजकम्।
नावं निस्तीर्णकान्तारा आतुराश्च चिकित्सकम्॥९३॥

( अन्वयः ) शिक्षिताः, शिष्याः, आचार्यं, कृतदाराः, च मातरम्, विगतकामास्तु, नारीं, कृतार्थाः, च, प्रयोजकं, निस्तीर्णकान्ताराः, नावं, आतुराः, च चिकित्सकम् एते षट् पूर्वोपकारिणं नित्यं अवमन्यन्ते हि ॥ ९३ ॥

( सुबोधिनी ) पूर्वमुपकरोतीति तं, पूर्वोपकारिणं = पूर्वोपकृतं, नित्यं, हि, अवमन्यन्ते = तिरस्कुर्वन्ति, शिक्षिताः = अधिगतविद्याः, आचार्यं = उपदेष्टारं, कृताः दाराः यैस्ते = कृतदाराः कृतस्त्रियः, मातरम् = जननीं, विगतकामाः = नष्टकामवासनाः, नारीं = स्त्रियं, कृतोऽर्थः यैस्ते- कृतार्थाः = सिद्धार्थाः, प्रयोजयतीति तं प्रयोजकं = साधकं, निस्तीर्णः कान्तारो यैस्ते निस्तीर्णकान्ताराः = अतिक्रान्तकान्ताराः, नावं = नौकां, आतुराः = रोगिणः, ( आरोग्ये सतीति शेषः ) चिकित्सकं = वैद्यम्, एते षट् पूर्वोपकारिणं = कृतपूर्वोपकारं, नित्यं = सर्वदा अवमन्यन्ते ॥९२॥९३

( हिन्दी ) राजन्! ये छ आदमी अपने पहलेके उपकार करने वालेको भूल जाते हैं विद्या पढ़ने पर शिष्य अपने गुरुको, ब्याह करने पर पुत्र

अपनी माताको, भोग करलेने पर पुरुष स्त्रीको, कार्य सिद्ध हो जाने पर कृतार्थ पुरुष अपनी सहायता करने वालेको, पार पहुंचे हुए लोग नावको और आराम हो जाने पर रोगी वैद्यको छोड़ देते हैं ॥ ९२ ॥ ९३ ॥

**आरोग्यमानृण्यमविप्रवासः सद्भिर्मनुष्यैः सह संप्रयोगः ।**
**स्वप्रत्यया वृत्तिरभीतवासः षड् जीवलोकस्य सुखानि राजन् ॥**

( अन्वयः ) हे राजन् ! आरोग्यं, आनृण्यं, अविप्रवासः, सद्भिः, मनुष्यैः, सह, संप्रयोगः, स्वप्रत्यया वृत्तिः, अभीतवासः जीवलोकस्य षड् सुखानि ( सन्ति ) ॥ ९४ ॥

( सुबोधिनी ) हे राजन् आरोग्यं = स्वास्थ्यं, आनृण्यं = ऋणराहित्यं, अविप्रवासः = स्वदेशनिवासः सद्भिः = सज्जनैः, मनुष्यैः सह, संप्रयोगः संगमः, स्वप्रत्यया = स्वानुकूला, वृत्तिः = जीविका, अभीतश्चासौ वासोऽभीतवासः, निर्भयनिवासः, जीवलोकस्य = मर्त्यलोकस्य, इमानि षट् = पूर्वोक्तानि, सुखानि = सुखसाधनानि ( सन्तीति शेषः ) ॥ ९४ ॥

( हिन्दी ) हे राजन् ! आरोग्य, ऋणी न होना सज्जनोंकी संगति, अपने अनुकूल जीविका, अपने देशमें रहना और निर्भय निवास यह छः वस्तु जीव लोकमें सर्वोपरि सुख देने वाली हैं ॥ ९४ ॥

**ईर्षी घृणी न सन्तुष्टः क्रोधनो नित्यशङ्कितः ।**
**परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥ ९५ ॥**

( अन्वयः ) ईर्ष्यी, घृणी, न संतुष्टः, क्रोधनः, नित्यशङ्कितः, परभाग्योपजीवी, च, एते, षट्, नित्यं, दुःखिताः ( भवन्ति ) ॥ ९५ ॥

( सुबोधिनी ) ईर्ष्यी = इतरोत्कर्षमसहमानः, घृणी = घृणास्यास्तीति घृणी = घृणावान्, न संतुष्टः = असन्तुष्टः, क्रोधनः = कोपनशीलः, नित्यं शंका संजातास्य नित्यशंकितः = शंकितचेताः, परभाग्यमुपजीवतीति = परभाग्योपजीवी = परदैववृत्तिः, च, एते, षट्, नित्यं, दुःखिताः = दुःखभाजः ( भवन्तीति शेषः ) ॥ ९५ ॥

( हिन्दी ) डाह रखनेवाला घृणित काम करने वाला, असन्तुष्ट, क्रोधी, नित्यशंकित रहने वाला और दूसरेके टुकड़े खाने वाला यह छ आदमी सदा दुःखी रहते हैं ॥ १५ ॥

सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः ।
प्रायशो यैर्विनश्यन्ति कृतमूला अपीश्वराः ॥ १६ ॥
स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् ।
महच्च दण्डपारुष्यमर्थदूषणमेव च ॥ १७ ॥

( अन्वयः ) राज्ञा, सदा, व्यसनोदयाः, सप्त, दोषाः हातव्याः, यैः, कृतमूलाः, अपि, ईश्वराः, प्रायशः, विनश्यन्ति । स्त्रियः, अक्षा, मृगया, पानं, पञ्चमं वाक्पारुष्यं, महत्, च, दण्डपारुष्यं, अर्थदूषणं, एव, च, एते सप्त दोषाः ॥ १६ ॥ १७ ॥

( सुबोधिनी ) राज्ञा=नृपेण, सदा, व्यसनोदयाः=दुःखोत्पादकाः, सप्त=निम्नांकिताः सप्त, दोषाः, हातव्याः=त्याज्याः, यैः=दोषैः, कृतं मूलं येषान्ते=कृतमूलाः=दृढमूलाः, अपि, ईश्वराः=वैभवशालिनः, प्रायशः=प्रायेण, विनश्यन्ति=विनाशं गच्छन्ति । स्त्रियः, अक्षा= द्यूतक्रीडा, मृगया=आखेटकं, पानं=सुरादिपानं, वाचः पारुष्यं वाक्पारुष्यं= वचनकटुत्वं, महत्=अधिकं, दण्डस्य पारुष्यं दण्डपारुष्यं =दण्डकाठिन्यं, अर्थस्य दूषणमर्थदूषणं=धनदुरुपयोगः, एते सप्त दोषाः॥

( हिन्दी ) राजा, दुःख उत्पन्न करने वाले इन सात दोषोंसे, जिनसे बड़े से बड़े वैभव शालीका विनाश हो सकता है हमेशा बचा करे, वे दोष ये हैं:—स्त्री, जुवा, आखेट, सुरापान, कटुवचन, कठिनदंड और धनका दुरुपयोग ॥ १६ ॥ १७ ॥

अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः ।
ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥ १८ ॥

ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति ।
रमते निन्दया चैषां प्रशंसां नाभिनन्दति ॥ ९९ ॥
नैनान् स्मरति कृत्येषु याचितश्चाभ्यसूयति ।
एतान्दोषान्नरः प्राज्ञो बुध्येद् बुद्ध्वा विसर्जयेत्॥१००॥

( अन्वयः ) विनशिष्यतः, नरस्य, अष्टौ, पूर्वनिमित्तानि, ( भवन्तीतिशेषः ) प्रथमं ब्राह्मणान् द्वेष्टि, ब्राह्मणैः, च, विरुध्यते, ब्राह्मणस्वानि च, आदत्ते, ब्राह्मणान्, जिघांसति, एषां, निन्दया, च, रमते, प्रशंसां, न, अभिनन्दति, कृत्येषु, एनान्, न, स्मरति, याचितः, च, अभ्यसूयति, प्राज्ञः, नरः, एतान्, दोषान्, बुध्येत् बुद्ध्वा, च, विसर्जयेत् ॥९८॥९९॥१००॥

( सुबोधिनी ) विनशिष्यतीति तस्य विनशिष्यतः = विनाशोन्मुखस्य, नरस्य, अष्टौ,पूर्वनिमित्तानि = पूर्वचिन्हानि (भवन्ति) प्रथमं = पूर्वं तावत्, ब्राह्मणान्, द्वेष्टि = वैरायते, ब्राह्मणैः, च, विरुध्यते, ब्राह्मणानां स्वानि ब्राह्मणस्वानि = विप्रधनानि, च, आदत्ते = गृह्णाति, ब्राह्मणान् जिघांसति = हन्तुमिच्छति, एषां = ब्राह्मणानां, निन्दया च, रमते = प्रसन्नो भवति, प्रशंसां = श्लाघां, न अभिनन्दति = नानुमोदते, कृत्येषु = कार्येषु, एनान् = ब्राह्मणान्, न स्मरति = नाह्वयति, याचितः = धनाय प्रार्थितः च, अभ्यसूयति = निन्दति, प्राज्ञः = बुद्धिमान्, नरः एतान् = उक्तान्, दोषान्, बुध्येत् = जानीयात्, बुद्ध्वा = ज्ञात्वा च, विसर्जयेत् = त्यजेत् ॥९८॥९९॥१००॥

( हिन्दी ) विनाशोन्मुख मनुष्यके यह और आठ लक्षण कहे हैं:— ब्राह्मणसे द्वेष करना, उनसे विरोध करना, उनके धनका अपहरण करना, उन्हें मारनेको तयार होना, उनकी निन्दासे सन्तुष्ट होना, उनकी प्रशंसा नहीं सुनना, जब ब्राह्मण उससे कुछ माँगे तब उसकी निन्दा करना, शुभकार्योंमें ब्राह्मणोंको नहीं पूछना, इसलिये बुद्धिमान् मनुष्यका यह धर्म है कि वह इन दोषोंको जानकर इन्हें छोड़ देवे ॥९८॥९९॥१००॥

अष्टाविमानि हर्षस्य नवनीतानि भारत ।
वर्तमानानि दृश्यन्ते तान्येव स्वसुखान्यपि ॥१०१॥
समागमश्च सखिभिर्महांश्चैव धनागमः ।
पुत्रेण च परिष्वङ्गः सन्निपातश्च मैथुने ॥ १०२ ॥
समये च प्रियालापः स्वयूथ्येषु समुन्नतिः ।
अभिप्रेतस्य लाभश्च पूजा च जनसंसदि ॥१०३॥

( अन्वयः ) हे भारत ! इमानि, अष्टौ, हर्षस्य नवनीतानि, वर्तमानानि दृश्यन्ते, तान्येव, स्वसुखानि अपि ( सन्ति ) सखिभिः, च, समागमः, महान्, च, एव, धनागमः, पुत्रेण च, परिष्वङ्गः, मैथुने च, सन्निपातः, समये च प्रियालापः, स्वयूथ्येषु, समुन्नतिः, अभिप्रेतस्य, लाभः, च, जनसंसदि पूजा चेति ॥ १०१ ॥ १०२ ॥ १०३ ॥

( सुबोधिनी ) हे भारत !=हे धृतराष्ट्र ! इमानि=वक्ष्यमाणानि, अष्टौ, हर्षस्य, नवनीतानि=साराणि, वर्तमानानि=उपस्थितानि, दृश्यन्ते, तान्येव=मित्रसमागमादीन्येव, स्वस्य सुखानि=स्वसुखानि=आत्मसुख-साधनानि ( सन्तीति शेषः ) तद्यथा—सखिभिः=मित्रैः, समागमः=संगतिः, महान्=अधिकः, च, एव, धनस्यागमो धनागमः=अर्थागमः, पुत्रेण च, परिष्वंगः=सम्मेलनं, मैथुने=रतिकाले, सन्निपातः=केलि-सुखमित्यर्थः, समये=काले, प्रियालापः=मधुरभाषणं, स्वयूथ्येषु=स्ववर्ग्येषु, समुन्नतिः=उत्कर्षलाभः, अभिप्रेतस्य=इष्टस्य, लाभः=प्राप्तिः, जनानां संसत् जनसंसत् तस्यां जनसंसदि=सभायां, पूजा =सत्कारः, चेति ॥ १०१ ॥ १०२ ॥ १०३ ॥

( हिन्दी ) हे राजन् ! मित्रका मिलना, बहुतसे धनकी प्राप्ति, पुत्रको छातीसे लगाना, स्त्री सम्भोग, मधुरभाषण, अपने पक्षकी उन्नति, वाञ्छित वस्तुका लाभ और लोगोंमें प्रतिष्ठा प्राप्त करना ये आठ बातें सुखका सारांश है ॥ १०१ ॥ १०२ ॥ १०३ ॥

**अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यं च दमः श्रुतं च।**
**पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ।१०४।**

(अन्वयः) प्रज्ञा, कौल्यं, दमः, श्रुतं च पराक्रमः, च, अबहुभाषिता, यथाशक्ति दानं, कृतज्ञता च, इमे, अष्टौ गुणाः, पुरुषं दीपयन्ति ॥ १०४ ॥

(सुबोधिनी) प्रज्ञा=बुद्धिः, कुलस्य भावः कौल्यं=कुलीनता, दमः=इन्द्रियदमनं, श्रुतं=वेदाभ्यासः, पराक्रमः=शूरता, च, अबहुभाषितं=परिमितभाषणं, शक्तिमनतिक्रम्य यथाशक्ति=यथासामर्थ्यं, दानं, कृतं जानातीति तस्य भावः कृतज्ञता=कृतोपकारज्ञातृत्वं, इमे अष्टौ गुणाः पुरुषं, दीपयन्ति=प्रकाशयन्ति ॥ १०४ ॥

(हिन्दी) हे राजन् समझदारी, कुलीनता, इन्द्रियनिग्रह, शास्त्रका ज्ञान, पराक्रम, व्यर्थ बहुत बक बक न करना, यथाशक्ति दान करना और कृतज्ञता ये आठ गुण मनुष्यके तेज और प्रभावको बढ़ाते हैं ॥ १०४ ॥

**नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकम् ।**
**क्षेत्रज्ञाधिष्ठितं विद्वान् यो वेद स परः कविः ॥१०५॥**

(अन्वयः) नवद्वारं, त्रिस्थूणं, पंचसाक्षिकं, क्षेत्रज्ञाधिष्ठितं, इदं वेश्म, यः, विद्वान्, वेद, सः, परः, कविः ॥ १०५ ॥

(सुबोधिनी) नव द्वाराणि यस्मिंस्तत् नवद्वारं=नवद्वारात्मकं, त्रयः स्थूणा यस्मिंस्तत् त्रिस्थूणं=त्रिधारकं (वातः पित्तः श्लेष्मा त्रयः स्थूणाः), पंच साक्षिणः यस्य तत् पंचसाक्षिकं (रूपरसगन्धस्पर्शशब्दाः साक्षिणः), क्षेत्रज्ञेनाधिष्ठितं क्षेत्रज्ञाधिष्ठितं=आत्माश्रितं, इदं, वेश्म=शरीरगृहं, यः, विद्वान्, वेद=जानाति. सः, परः=महान्, कविः=प्राज्ञः ॥ १०५ ॥

(हिन्दी) यह मनुष्यका शरीर एक घर है, इसमें नव द्वार हैं, वात पित्त और श्लेष्मा ये तीन स्तम्भ हैं रूपादि पांच विषय साक्षी हैं, इसमें

क्षेत्रज्ञ जीव रहता है। जो मनुष्य इस शरीर तत्वको जानता है वही पण्डित है ॥ १०५ ॥

दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान्।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥१०६॥
त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश।
तस्मादेतेषु सर्वेषु न प्रसज्जेत पण्डितः ॥ १०७ ॥

(अन्वयः) हे धृतराष्ट्र! दश धर्मं न जानन्ति, तान् निबोध, तद्यथा-मत्तः प्रमत्तः, उन्मत्तः, श्रान्तः, क्रुद्धः, बुभुक्षितः, त्वरमाणः, च, लुब्धः, च, भीतः, कामी च ते दश (सन्ति), तस्मात्, एतेषु, सर्वेषु, पण्डितः, न प्रसज्जेत् ॥ १०६ ॥ १०७ ॥

(सुबोधिनी) हे धृतराष्ट्र! दश = दशविधपुरुषाः, धर्मं, न जानन्ति = न अवगच्छन्ति, तान्, निबोध = जानीहि, मत्तः = मदिरोन्मत्तः, प्रमत्तः = अनवहितः, उन्मत्तः = अपस्मारादिना उन्मत्तः, श्रान्तः = मार्गखिन्नः, क्रुद्धः, बुभुक्षा संजातास्य बुभुक्षितः = क्षुधितः, त्वरत इति त्वरमाणः = शीघ्रतां कुर्वाणः, लुब्धः = लोभी, भीतः = संजातभयः, कामी = कामुकः, एते दश पुरुषाः, (वर्तन्त इति शेषः), तस्मात् = तस्माद्धेतोः, एतेषु = उक्तेषु, सर्वेषु, पण्डितः, न प्रसजेत् = न संगच्छेत् ॥१०६॥१०७॥

(हिन्दी) हे धृतराष्ट्र! नशापीने वाला, सावधान न रहने वाला, अपस्मारादिरोग ग्रस्त, थका हुआ, क्रोधी, क्षुधासे पीड़ित, लोभी, भयभीत, जल्दीबाज और कामी मनुष्य धर्मको नहीं जानते इस वास्ते बुद्धिमान् मनुष्य इनसे संग नही करे ॥ १०६ ॥ १०७ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम्।
पुत्रार्थमसुरेन्द्रेण गीतं चैव सुधन्वना ॥ १०८ ॥

(अन्वयः) अत्रैव, पुरातनम् इमम् इतिहासम् उदाहरन्ति असुरेन्द्रेण सुधन्वना पुत्रार्थं यद् गीतम् ॥ १०८ ॥

( सुबोधिनी ) हे धृतराष्ट्र ! अत्रैव = अस्मिन्नेव प्रकरणे, पुराभवः पुरातनस्तं पुरातनम्, इमं = वक्ष्यमाणम्, इतिहासं = कथाभागं, उदाहरन्ति = कथयन्ति, ( पुराविद इति शेषः ) असुराणामिन्द्र असुरेन्द्रस्तेन = दैत्येन्द्रेण सुधन्वना, पुत्रार्थं = पुत्रमुद्दिश्येत्यर्थः, यद् गीतम् = कथितमित्यर्थः, तन्मया कथ्यत इति शेषः ॥ १०८ ॥

( हिन्दी ) हे धृतराष्ट्र यहाँ एक प्राचीन इतिहास कहा जाता है असुरेन्द्र सुधन्वाने अपने पुत्रसे जोकुछ कहा है वह मैं आपको सुनाता हूँ ॥

यः काममन्यू प्रजहाति राजा पात्रे प्रतिष्ठापयते धनं च ।
विशेषविच्छ्रुतवान् क्षिप्रकारी तं सर्वलोकः कुरुते प्रमाणम् ॥

(अन्वयः) विशेषवित्, श्रुतवान्, क्षिप्रकारी, यः, राजा, काममन्यू, प्रजहाति, पात्रे, धनं, च, प्रतिष्ठापयते, तं, सर्वलोकः प्रमाणम्, कुरुते ॥

(सुबोधिनी) विशेषं वेत्तीति विशेषवित् = विशेषज्ञः, श्रुतवान् = शास्त्रज्ञः, क्षिप्रं करोतीति क्षिप्रकारी = शीघ्रकारी ( दीर्घसूत्री न भवतीत्यर्थः ) यः, राजा, कामश्च मन्युश्चेति काममन्यू = कामक्रोधौ, प्रजहाति = त्यजति, पात्रे = सत्पात्रे, धनं, प्रतिष्ठापयते = स्थापयति, तं = राजानं, सर्वश्चासौ लोकः सर्वलोकः, प्रमाणं कुरुते = नियामकत्वेन स्वीकरोति ॥ १०९ ॥

( हिन्दी ) जो राजा कामक्रोधसे बचकर सुपात्रमें दान करता है, विशेषज्ञ होता है, शास्त्रोंका ज्ञाता और कर्तव्य कार्यको शीघ्र कर डालता है, सब लोग अपने लिये उसे प्रमाण मानते हैं ॥ १०९ ॥

जानाति विश्वासयितुं मनुष्यान् विज्ञातदोषेषु दधाति दण्डम्
जानाति मात्रां च तथा क्षमां च तं तादृशं श्रीर्जुषते समग्रा ॥

( अन्वयः ) ( यः ) मनुष्यान् विश्वासयितुं जानाति, विज्ञातदोषेषु दण्डं, दधाति, मात्रां च, तथा क्षमां च जानाति, तादृशं, तं, समग्रा, श्रीः, जुषते ॥ ११० ॥

( सुबोधिनी ) ( य इति शेषः ), मनुष्यान्, विश्वासयितुं

=आत्मनि विश्वासमुत्पादयितुं, जानाति, विज्ञातो दोषो येषान्तेषु, विज्ञातदोषेषु=विदितापराधेषु, दण्डं, दधाति=विदधाति, मात्रां=दण्डमात्रां च, तथा क्षमां=अनुग्रहं, जानाति, तादृशं, तं, राजानं, समग्रा=सकला, श्रीः, राजलक्ष्मीः, जुषते=भजति ॥ ११० ॥

( हिन्दी ) जो राजा दण्डकी मात्रा जानता है, अवसर पर क्षमा भी करता है, जिसका दोष मालूम होगया है उनको यथोचित दंड भी देना है, तथा मनुष्योंमें अपना विश्वास जमाना जानता है उसे सब प्रकारसे राजलक्ष्मी अपने आप भजती है ॥ ११० ॥

**सुदुर्बलं नावजानाति कश्चिद्युक्तो रिपुं सेवते बुद्धिपूर्वम् ।**
**न विग्रहं रोचयते बलस्थैः काले च यो विक्रमते स धीरः॥**

(अन्वयः) युक्तः यः, सुदुर्बलं, कश्चिद् रिपुं, न, अवजानाति, बुद्धिपूर्वं, सेवेते, बलस्थैः, विग्रहं न रोचयते, काले च, विक्रमते सः, धीरः (अस्ति)॥

( सुबोधिनी ) युक्तः=अवहितः, यः=यो राजा, सुदुर्बलं=शक्तिहीनं, कञ्चिद्, रिपुं=शत्रुं, न, अवजानाति=न अवमानयति, बुद्धिपूर्वं=युक्तिकौशलेन, सेवते=व्यवहरति, बलस्थैः=बलवद्भिः, विग्रहं=विरोधं, न रोचयते=नाभिलषति, काले=अवसरे च, विक्रमते =पराक्रमते, सः धीरः=गंभीरः ( भवतीत्यर्थः ॥) १११ ॥

( हिन्दी ) जो राजा किसी दुर्बलको अपमानकी दृष्टिसे नहीं देखता बुद्धि लड़ाकर शत्रुके दोषको देखता हुआ समयकी प्रतीक्षामें रहता है, सहाय सम्पन्न प्रबल शत्रुसे भिड़ता नहीं और समयपर पराक्रम प्रगट करता है वही धीर है ॥ ॥ १११ ॥

**प्राप्यापदं न व्यथते कदाचिदुद्योगमन्विच्छति चाप्रमत्तः ।**
**दुःखं च काले सहते महात्मा धुरंधरस्तस्य जिताः सपत्नाः॥**

(अन्वयः) (यः)धुरन्धरः, महात्मा आपदं, प्राप्य, न, व्यथते, अप्रमत्तः, च, उद्योगं, अन्विच्छति, काले, दुःखं, सहते, तस्य, सपत्नाः, जिताः॥११२

( सुबोधिनी ) (च इति शेषः), धुरं धरतीति धुरन्धरः, महात्मा=महानुभावः, आपदं=आपत्तिं, प्राप्य, लब्ध्वा; न, व्यथते=न खिद्यते, न प्रमत्तोऽप्रमत्तः=सावधानः, उद्योगं=उद्यमं, अन्विच्छति=करोति, काले=अवसरे, दुःखं, सहते, तस्य=तस्य राज्ञः, सपत्नाः=रिपवः, जिताः=पराभूताः ( भवन्तीति शेषः ) ॥ ११२ ॥

( हिन्दी ) जो, महानुभाव, आपत्ति आनेपर व्यथित नहीं होते सावधान होकर उद्योग नहीं छोड़ते, समय आनेपर दुःख भी सहलेते हैं, ऐसे महानुभावके शत्रु स्वयं नष्ट हो जाते हैं ॥ ११२ ॥

अनर्थकं विप्रवासं गृहेभ्यः पापैः सन्धिं परदाराभिमर्शम् ।
दम्भं स्तैन्यं पैशुनं मद्यपानं न सेवते यश्च सुखी सदैव ११३

( अन्वयः ) यः, अनर्थकं, गृहेभ्यः, विप्रवासं, पापैः सन्धिं, परदाराभिमर्शं, दम्भं, स्तैन्यं, पैशुनं, मद्यपानं च न सेवते, स सदैव सुखी ( भवति ) ॥ ११३ ॥

( सुबोधिनी ) यः=यो नरः, अनर्थकं=व्यर्थं, गृहेभ्यः, विप्रवासं=देशभ्रमणम्, पापैः=पापिभिः, सन्धिं=संसर्गम्, परदारैरभिमर्शः परदाराभिमर्शस्तं=परस्त्रीसंगमं, दम्भं=पाखण्डं, स्तैन्यं=चौर्यं, पैशुनं, पिशुनस्य भावः पैशुनं=छलं, मद्यस्य पानं मद्यपानं=सुरापानं, च न सेवते=नकरोति, सः, नरः, सदैव सुखी ( भवतीति शेषः ) ॥ ११३ ॥

( हिन्दी ) जो राजा विना कारण भ्रमण, पापियोंसे संसर्ग, परस्त्रीगमन, पाखण्ड, चोरी, छल और मद्यपानसे हमेशा बचा रहता है वह सर्वदा सुखी रहता है ॥ ११३ ॥

न संरम्भेणारभते त्रिवर्गमाकारितः शंसति तत्त्वमेव ।
न मित्रार्थे रोचयते विवादं नापूजितः कुप्यति चाप्यमूढः ११४

( अन्वयः ) अमूढः, संरम्भेण, त्रिवर्गं, न, आरभते, आकारितः तत्त्वमेव, शंसति, मित्रार्थे, विवादं न रोचयते, अपूजितः, अपि, न, कुप्यति ॥ ११ ॥

(सुबोधिनी) न मूढोऽमूढः = बुद्धिमान्, संरम्भेण = क्रोधेन, त्रयाणां = वर्गाणां समाहारस्त्रिवर्गं = धर्मकामार्थत्रयं, न आरभते = न प्रारभते, आकारितः = पृष्टः ( सन् ), तत्त्वमेव = यथार्थमेव, शंसति = ब्रवीति, मित्रस्यार्थे मित्रार्थे, विवादं = कलहं, न रोचयते = नाभिलषति, न पूजितोऽपूजितः = असत्कृतः, अपि, न कुप्यति = न क्रुध्यति ॥ ११४ ॥

( हिन्दी ) जो क्रोधसे बचकर धर्म, अर्थ और कामका प्रारम्भ करता है, पूछने पर तत्त्वकी सत्य बात कहता है, मित्रोंसे और स्वजनोंसे झगड़ा करना पसन्द नहीं करता और किसीके पूजा न करने परभी कोप नहीं करता वही बुद्धिमान् गिना जाता है ॥ ११४ ॥

न योऽभ्यसूयत्यनुकम्पते च न दुर्बलः प्रातिभाव्यं करोति ।
नात्याह किंचित् क्षमते विवादं सर्वत्र तादृग्लभते प्रशंसाम् ॥

( अन्वयः ) यः, न, अभ्यसूयति, अनुकम्पते, च, दुर्बलः, प्रातिभाव्यं, न करोति, किंचिद्, न, अत्याह, विवादं, क्षमते, तादृग्, सर्वत्र, प्रशंसां, लभते ॥ ११५ ॥

( सुबोधिनी ) यः, न, अभ्यसूयति = गुणिनः गुणेषु दोषाविष्करणं न करोति, 'किन्तु', अनुकम्पते = दयते, दुर्बलः = निर्बलः, प्रातिभाव्यं = विरोधं, न करोति, किंचिद्, न, अत्याह = ईषदपि कठोरं वचनं न ब्रवीति, विवादं = पारस्परिककलहं, क्षमते = शान्तं करोत्यर्थः, तादृग् = तथाविधो नरः, सर्वत्र, प्रशंसां = कीर्तिं, लभते = प्राप्नोति ॥ ११५ ॥

( हिन्दी ) जो ईर्ष्या नहीं करता बल्कि दीनों पर दया करता है, निर्बल होकर प्रबलसे विरोध नहीं करता, बढ़कर बात नहीं करता, विवादको शान्त करता है वही सर्वत्र प्रसंसाका पात्र है ॥ ११५ ॥

यो नोद्धतं कुरुते जातु वेषं न पौरुषेणापि विकत्थतेऽन्यान् ।
न मूर्छितः कटुकान्याह किञ्चित् प्रियं सदा तं कुरुते जनो हि ॥

( अन्वयः ) यः, जातु, उद्धतं, वेषं, न कुरुते, पौरुषेण, अपि,

अन्यान्, न, विकत्थते, मूर्छितः (अपि) किञ्चित्, कटुकानि, न, आह, तं, जनः, सदा, प्रियं, कुरुते ॥ ११६ ॥

( सुबोधिनी ) यः, जातु = कदाचिद्, 'अपि' उद्धतं = उग्रं, वेषं, न कुरुते = न विदधाति, पौरुषेण, पुरुषार्थेन, अपि, अन्यान्, न, विकत्थते = श्लाघते, मूर्च्छितः = व्याकुलः ( अपीति शेषः ) किञ्चिद्, कटुकानि = परुषाणि, न आह = न ब्रवीति, तं = तथाविधं नरं, जनः = लोकः, सदा, प्रियं = प्रियकरं कुरुते ॥ ११६ ॥

( हिन्दी ) जो उद्दण्डताका भाव प्रगटकरने वाले वेशको कभी धारण नहीं करता, पौरुषमें प्रबल होकर भी औरोंकी निन्दा नहीं करता और किसीके बुरे वचनसे क्रोधित होने पर भी कटुवचन नहीं कहता, वह मनुष्य सबको अपना प्यारा बना लेता है ॥ ११६ ॥

**न वैरमुद्दीपयति प्रशान्तं न दर्पमारोहति नास्तमेति ।**
**न दुर्गतोऽस्मीति करोत्यकार्यं तमार्यशीलं परमाहुरार्याः ११७**

( अन्वयः ) ( यः ) प्रशान्तं, वैरं, न 'उद्दीपयति, दर्पं, न, आरोहति, अस्तं, न, एति, "दुर्गतोऽस्मि" इति अकार्यं, न करोति, तं, आर्याः परं, आर्यशीलं, आहुः ॥ ११७ ॥

( सुबोधिनी ) ( य इति शेषः ) प्रशान्तं = शान्तिं गतं, वैरं = शत्रुतां, न, उद्दीपयति = न, उत्तेजयति, दर्पं = अभिमानं, न, आरोहति = आश्रयति, 'सः' अस्तं = नाशं, न, एति = न गच्छति, "दुर्गतः = दुःखितः, अस्मि" इति हेतोः, अकार्यं = किमपि जघन्यं कर्म्म, न करोति, तं आर्याः = शिष्टाः, अर्तुं सदाचरितुं योग्यं शीलं यस्य सः तम्, आर्यशीलं = सत्स्वभावं, आहुः = वदन्ति ॥ ११७ ॥

( हिन्दी ) जो शान्त हुये वैरको पुनः उत्तेजित नहीं करता, अहंकार नहीं करता, हीनताको नहीं प्राप्त होता, और बुरी दशामें पड़कर भी अकार्य नहीं करता, उसे आर्यजन श्रेष्ठ स्वभाव वाला कहते हैं ॥ ११७ ॥

न स्वे सुखे वै कुरुते प्रहर्षं नान्यस्य दुःखे भवति प्रहृष्टः।
दत्त्वा न पश्चात् कुरुते च तापं स कथ्यते सत्पुरुषार्यशीलः॥

(अन्वयः) (यः) स्वे, सुखे, प्रहर्षं न वै कुरुते, अन्यस्य, दुःखे, प्रहृष्टः, न, भवति, दत्त्वा, पश्चात्, अनुतापं न कुरुते, सः, सत्पुरुषार्यशीलः, कथ्यते ॥ ११८ ॥

(सुबोधिनी) (य इति शेषः) स्वे = स्वकीये, सुखं = सुखावस्थायां, प्रहर्षं = हर्षातिरेकं, न वै = नैव, कुरुते, अन्यस्य = परस्य, दुःखे प्रहृष्टः = सन्तुष्टः, न भवति, दत्त्वा, पश्चात् = अनन्तरं, अनुतापं = पश्चात्तापं, न कुरुते, सः = तथाविधो नरः, सत्पुरुषस्यार्यशीलमिवार्यशीलं यस्य सः सत्पुरुषार्यशीलः = सज्जनस्वभावः, कथ्यते ॥ ११८ ॥

(हिन्दी) जो मनुष्य अपने सुखमें बेहद खुशी नहीं मानता, दूसरोंके दुःखको देखकर प्रसन्न भी नहीं होता, पहले देकर पीछे उसका पश्चात्ताप नहीं करता; इस प्रकारके आदमी सज्जन कहेजाते हैं ॥ ११८ ॥

देशाचारान्समयान् जातिधर्मान् बुभूषते यः स परावरज्ञः।
स यत्र तत्राभिगतः सदैव महाजनस्याधिपत्यं करोति॥११९॥

(अन्वयः) यः, देशाचारान्, समयान्, जातिधर्मान्, बुभूषते, सः, परावरज्ञः (भवति) सः यत्र, तत्र, अभिगतः सदैव महाजनस्य, आधिपत्यं, करोति ॥ ११९ ॥

(सुबोधिनी) यः = यो नरः, देशस्याचारान् देशाचारान् = देशव्यवहारान्, समयान् = समयप्रवाहान्, जातीनां धर्मान् जातिधर्मान् = तत्तज्जातिकुलाचारान्, बुभूषते, देशकालप्रवाहानुसारं व्यवहर्तुमिच्छतीत्यर्थः, सः = तथाविधः नरः, परावरं जानातीति परावरज्ञः = पूर्वापरव्यवहारकुशलः, (भवतीति शेषः), सः = स एव, यत्र = यस्मिन् देशे, अभिगतः = प्राप्तः, भवतीति शेषः, तत्र, महाजनस्य = जनसमुदायस्य अधिपतेर्भाव आधिपत्यं = स्वाम्यं करोति (अधिपतिर्भवतीत्यर्थः) ॥११९॥

( हिन्दी ) जो मनुष्य देशाचार समयकी गति और जातिधर्मके अनुसार व्यवहार करता है वही बीती और आने वाली बातोंको समझकर काम करने वाला कहागया है वह जहां कहीं भी जाता है वहां लोगों पर अपना आधिपत्य जमाता है ॥ ११९ ॥

दम्भं मोहं मत्सरं पापकृत्यं राजद्विष्टं पैशुनं पूगवैरम् ।
मत्तोन्मत्तैर्दुर्जनैश्चापि वादं यः प्रज्ञावान् वर्जयेत्स प्रधानः १२०

( अन्वयः ) प्रज्ञावान्, यः, दम्भं, मोहं, मत्सरं, पापकृत्यं, राजद्विष्टं, पैशुनं, पूगवैरं, मत्तोन्मत्तैः, दुर्जनैः, च अपि वादं, वर्जयेत्, सः, प्रधानः ( भवति ) ॥ १२० ॥

( सुबोधिनी ) यः, प्रज्ञास्यास्तीति प्रज्ञावान् = बुद्धिमान्, दम्भं = आडम्बरं, मोहं, मत्सरं = ईर्ष्यां, पापानां कृत्यं पापकृत्यं = पापकर्म, राजभिर्द्विष्टं :राजद्विष्टं = राजद्वेषं, पैशुनं = कर्णे जपत्वं, पूगैः वैरं = पूगवैरं = समुदायवैरं, मत्ताश्चोन्मत्ताश्च मत्तोन्मत्तास्तैः = मदमत्तैर्विक्षिप्तैश्च, अपि, वादं = विवादं, वर्जयेत् = त्यजेत्, सः, प्रधानः श्रेष्ठः ( भवतीति शेषः )॥

( हिन्दी ) जो बुद्धिमान् पाखण्ड, मोह, डाह, पापकर्म, राजासे द्वेष, चुगलखोरी, समुदायसे वैर, मतवाला, पागल, और दुर्जनके साथ विवाद नहीं करता वह मनुष्य श्रेष्ठ है ॥ १२० ॥

दानं मोहं दैवतं मङ्गलानि प्रायश्चित्तान् विविधांल्लोकवादान्।
एतानि यः कुरुते नैत्यकानि तस्योत्थानं देवता राधयन्ति१२१

(अन्वयः) यः दानं, मोहं, दैवतं, मङ्गलानि, प्रायश्चित्तान्, विविधान्, लोकवादान् नैत्यकानि, एतानि, कुरुते, तस्य, उत्थानं, देवताः, राधयन्ति ॥

( सुबोधिनी ) यः = यो नरः, नैत्यकानि = नित्यं भवानि, एतानि = वक्ष्यमाणानि, दानं, मोहं = प्रीतिः, दैवतं-देवताया इदं दैवतं = देवपूजनं, मङ्गलानि, अन्यानि शुभकर्माणि, प्रायश्चित्तान् = पापप्रक्षालनक्षमवैध-कर्माणि, विविधान् = अनेकप्रकारान्, लोकस्य वादान्, लोकवादान् =

लोकव्यवहारानित्यर्थः, कुरुते = विदधाति, तस्य, उत्थानं = उन्नतिं, देवताः = देवाः, राधयन्ति = संवर्धयन्ति ॥ १२१ ॥

( हिन्दी ) जो मनुष्य नित्यही दान, प्रीति, देवपूजन, और शुभकर्म, देवताओंकी आराधना, प्रायश्चित्तके लिये पञ्चमहायज्ञ और सब प्रकारके लोक व्यवहार करता है, उसका अभ्युदय देवता चाहते हैं ॥ १२१ ॥

**समैर्विवाहं कुरुते न हीनैः समैः सख्यं व्यवहारं कथां च ।**
**गुणैर्विशिष्टांश्च पुरो दधाति विपश्चितस्तस्य नयाः सुनीताः॥**

( अन्वयः ) ( यः ) समैः, विवाहं, कुरुते, हीनैः, न ( कुरुते ), समैः, सख्यं, व्यवहारं, कथां, च (कुरुते), गुणैः, विशिष्टान्, विपश्चितः, पुरो, दधाति, तस्य, नयाः, सुनीताः, ( भवन्ति ) ॥ १२२ ॥

( सुबोधिनी ) ( य इति शेषः ) समैः = समानशीलैः, विवाहं, कुरुते, हीनैः = नीचै, न ( कुरुत इति शेषः ) समैः = तुल्यैः, सख्युर्भावं सख्यं = मैत्रीं, व्यवहारं = दैनन्दिनं लौकिकं व्यवहारं, कथां = वार्त्तालापं, कुरुते, 'यश्च' गुणैः = दयादाक्षिण्यादिभिः, विशिष्टान्, विपश्चितः = विदुषः, पुरः = अग्रे, दधाति = करोति, तस्य = नरस्य, नयाः = नीतयः, सुनीताः = फलोन्मुखाः ( भवन्ति ) ॥ १२२ ॥

( हिन्दी ) जो मनुष्य बराबर वालोंसे व्याह, मित्रता, व्यवहार और बातचीत करता है—हीनोंसे नहीं, और जो गुणोंमें अपनेसे विशेषता रखने वालेको आदर्श मानता है, उसकी नीति सुसङ्गत होती है ॥१२२॥

**मितं भुङ्क्ते संविभज्याश्रितेभ्यो मितं स्वपित्यमितं कर्म कृत्वा ।**
**ददात्यमित्रेष्वपि याचितः संस्तमात्मवन्तं प्रजहत्यनर्थाः १२३**

( अन्वयः ) ( यः ) आश्रितेभ्यः, संविभज्य, मितं, भुङ्क्ते, अमितं, कर्म, कृत्वा, मितं, स्वपिति, याचितः, सन्, अमित्रेषु, अपि, ददाति, तं, आत्मवन्तं, अनर्थाः, प्रजहति ॥ १२३ ॥

( सुबोधिनी ) ( य इति शेषः ) आश्रितेभ्यः, आश्रितजनेभ्यः, संविभज्य = विभागपूर्वकं दत्वा, मितं = अल्पं, भुङ्क्ते = अश्नाति, अमितं =

बहु, कर्म=कार्यं, कृत्वा, मितं=परिमितं, स्वल्पमित्यर्थः, स्वपिति = शेते, याचितः=प्रार्थितः, सन्, अमित्रेषु, अपि = रिपुष्वपि, ददाति, तं, आत्मवन्तं = मनस्विनं, अनर्थाः = प्रतिकूलार्थाः, प्रजहति = त्यजन्ति ॥१२३॥

( हिन्दी ) जो आश्रितोंको बाँटकर आप थोड़ा खाता है, अधिक समय तक काम करके भी थोड़ी ही देर सोता है, माँगने पर शत्रुको भी देता है ऐसे मनस्वीके पास कभी अनर्थं फटकता नहीं ॥ १२३ ॥

**चिकीर्षितं विप्रकृतं च यस्य नान्ये जनाः कर्म जानन्ति किञ्चित्**
**मन्त्रे गुप्ते सम्यगनुष्ठिते च नाल्पोऽप्यस्य च्यवते कश्चिदर्थः ॥**

( अन्वयः ) चिकीर्षितं, विप्रकृतं च यस्य किंचिद् कर्म अन्ये जनाः, न, जानन्ति, सम्यक्, अनुष्ठिते मंत्रे, गुप्ते, च, अस्य, अल्पः, अपि, कश्चिदर्थः, न च्यवति ॥ १२४ ॥

( सुबोधिनी ) कर्तुमिष्टं चिकीर्षितं, विप्रकृतं = विरुद्धं, यस्य, किंचिद् 'अपि' कर्म = कार्यं, अन्ये = इतरे जनाः, न जानन्ति = न विदन्ति, सम्यक्=यथावत्, अनुष्ठिते = सम्पादिते, मंत्रे = विचारे च, गुप्ते = रक्षिते, 'सति' अस्य = जनस्य, कश्चिद्, अर्थः = एकोऽपि विषयः, न च्यवति = न भ्रंशते ॥ १२४ ॥

( हिन्दी ) जिसकी सलाह और कार्यको अन्य लोग नहीं जान पाते उसका कोई काम जराभी नहीं बिगड़ता, क्योंकि उसका मन्त्र गुप्त रहता है और वह अच्छी तरह उसकामको करलेता है ॥ १२४ ॥

**यः सर्वभूतप्रशमे निविष्टः सत्यो मृदुर्मानकृच्छुद्धभावः ।**
**अतीव स ज्ञायते ज्ञातिमध्ये महामणिर्जात्य इव प्रसन्नः १२५**

( अन्वयः ) यः, सर्वभूतप्रशमे, निविष्टः, सत्यः, मृदुः, मानकृत्, शुद्धभावः, सः, ज्ञातिमध्ये, जात्यः, महामणिः, इव, अतीव, प्रसन्नः, ज्ञायते ॥

( सुबोधिनी ) यः, सर्वभूतानां प्रशमे सर्वभूतप्रशमे = सर्वजीवनिवृत्तौ, निविष्टः=तत्परः, सत्यः=सत्यभाषी, मृदुः=कोमलचेताः, मान-

कृत् = सन्मानकरः, शुद्धः भावो यस्य सः शुद्धभावः = पवित्रविचारः, सः, ज्ञातिमध्ये, जात्यः = श्रेष्ठः, उत्तमे आकरे जात इत्यर्थः, महान् मणिरिति महामणिः, इव, अतीव = अत्यन्तं, प्रसन्नः = सन्तुष्टः, ज्ञायते = अवगम्यते॥

(हिन्दी) जो मनुष्य सब जीवोंके सुख और शान्तिमें लीन है, सत्यबोलता है मृदुस्वभाव वाला है, बड़ोंका सम्मान करता है, शुद्ध भावना वाला है, वह अपनी जातिमें अच्छी खानके बहुमूल्य उज्वल रत्नकी तरह प्रसन्न और जगमगाता हुआ देख पड़ता है॥ १२५॥

**य आत्मनापत्रपते भृशं नरः स सर्वलोकस्य गुरुर्भवत्युत।**
**अनन्ततेजाः सुमना समाहितः स तेजसा सूर्य इवावभासते॥**

(अन्वयः) यः, नरः, आत्मना, भृशं, अपत्रपते, सः, सर्वलोकस्य, गुरुः, भवति, उत, अनन्ततेजाः, सुमनाः समाहितः सः, तेजसा, सूर्यः, इव, अवभासते॥ १२६॥

(सुबोधिनी) यः, नरः, आत्मना = स्वयमेव, भृशं = अधिकं, अपत्रपते = परैरज्ञातेऽपि स्वदोषे आत्मनि लज्जते, सः = स नरः, सर्वश्चासौ लोकः सर्वलोकस्तस्य सर्वलोकस्य = अखिललोकस्य, गुरुः = श्रेष्ठः, भवति, उत = अथवा, अनन्तं तेजो यस्य सोऽनन्ततेजाः = महातेजस्वी, शोभनं मनो यस्य सः सुमनाः = शोभनान्तःकरणः, समाहितः = सावधानचित्तः, सः, तेजसा, सूर्यः, इव, अवभासते = प्रकाशमानो भवति॥ १२६॥

(हिन्दी) जो मनुष्य दूसरोंसे छिपे हुये अपने बुरे विचार या पाप कर्म्म पर आपही लज्जित होता है, वही सबका गुरु होता है। वह अनन्त तेजवाला, अच्छे हृदयका, सावधान पुरुष संसारमें सूर्यकी तरह प्रकाशमान होता है॥ १२६॥

**वने जाताः शापदग्धस्य राज्ञः पाण्डोः पुत्राः पञ्च पञ्चेन्द्रकल्पाः**
**त्वयैव बाला वर्धिताः शिक्षिताश्च तवादेशं पालयंत्याम्बिकेय॥**

(अन्वयः) हे आम्बिकेय! शापदग्धस्य, राज्ञः, पाण्डोः, पञ्च, वने,

जाताः इन्द्रकल्पाः, पञ्च, बालाः, पुत्राः, त्वया, एव वर्धिताः, शिक्षिताः, च, तव आदेशं, पालयन्ति ॥ १२७ ॥

( सुबोधिनी ) अम्बिकाया अपत्यं, पुमानाम्बिकेयः तत्सम्बुद्धौ हे आम्बिकेय! अम्बिकापुत्र ! शापेन दग्धस्य शापदग्धस्य = शापविनष्टस्य, राज्ञः पाण्डोः = एतन्नाम्नो राज्ञः, पञ्च, वने, जाताः, ईषदूना इन्द्राः इन्द्रकल्पाः = इन्द्रतुल्याः, पञ्च = पंचसंख्याकाः, बालाः = सुकुमाराः पुत्राः, त्वया = भवता, एव, वर्धिताः = पालिताः, शिक्षिताः = पाठिताः, च तव = भवतः, आदेशं = आज्ञां, पालयन्ति = स्वीकुर्वन्ति ॥ १२७ ॥

( हिन्दी ) हे धृतराष्ट्र ! राजा पाण्डु जब ब्रह्मशापसे नष्ट होगये तब वनमें उत्पन्न उनके इन्द्र तुल्य पाँचों पुत्रोंको यहाँ लाकर आपने ही पाला इतना बड़ा किया और शास्त्र तथा शस्त्रकी शिक्षा दिलाई, वे इस समय भी आपकी आज्ञाका पालन कर रहे हैं ॥ १२७ ॥

प्रदायैषामुचितं तात राज्यं सुखी पुत्रैः सहितो मोदमानः ।
न देवानां नापि च मानुषाणां भविष्यसि त्वं तर्कणीयो नरेन्द्र!

( अन्वयः ) हे तात ! एषां, उचितं, राज्यं, प्रदाय, पुत्रैः सहितः, मोदमानः, सुखी, त्वं, हे नरेन्द्र ! न देवानां नापि च, मानुषाणां, तर्कणीयः, भविष्यसि ॥ १२८ ॥

( सुबोधिनी ) हे तात ! एषां = पुत्राणां, उचितं = यथोचितं, राज्यं, प्रदाय = दत्वा, पुत्रैः, सहितः, मोदत इति मोदमानः = हृष्यन्, सुखी, त्वं, न, देवानां = सुराणां, नापि, मानुषाणां, तर्कणीयः = शक्यः, भविष्यसि ॥ १२८ ॥

( हिन्दी ) हे तात ! पाण्डुपुत्रोंको उनके हिस्सेका राज्य उन्हें दे दीजिये और समस्त पुत्रों सहित प्रसन्न होकर आपभी आनन्दके साथ सुख भोगिये । हे नरेन्द्र ! ऐसा करनेसे न तो देवता आपकी निन्दा करेंगे और न मनुष्य ही बदनाम करेंगे ॥ १२८ ॥

इति श्रीविदुरनीतौ प्रथमोऽध्यायः ।

## द्वितीयोऽध्यायः—

### धृतराष्ट्र उवाच—

**जाग्रतो दह्यमानस्य यत्कार्यमनुपश्यसि ।**
**तद् ब्रूहि त्वं हि नस्तात ! धर्मार्थकुशलो ह्यसि ॥१॥**

( अन्वयः ) हे तात ! त्वं, जाग्रतः, दह्यमानस्य, यत्, कार्यं, अनुपश्यसि, तद्, नः, ब्रूहि, हि, धर्मार्थकुशलः, असि ॥ १ ॥

( सुबोधिनी ) हे तात ! हे विदुर ! त्वं = भवान्, जाग्रतः = = विनिद्रस्य, दह्यत इति दह्यमानस्तस्य = चिन्तासन्तप्यमानस्य, यत्, कार्यं = कल्याणमार्गं, अनुपश्यसि = विचारयसि, तत् कार्यं नः = अस्मान्, ब्रूहि = कथय, हि = यस्मात् कारणात् (त्वमिति शेषः) धर्मश्च अर्थश्च धर्मार्थौ तत्र कुशलः धर्मार्थकुशलः = धर्मार्थोपदेशचतुरः, असि ॥

( हिन्दी ) धृतराष्ट्रने कहा—हे भाई विदुर ! इस प्रकार नींद न आनेपर चिन्तासे पीड़ित मनुष्यको क्या करना चाहिये ? तुम धर्म और अर्थकी बातोंमें निपुण हो, मेरे इस प्रश्नका सविस्तर उत्तर दो ॥ १ ॥

**त्वं मां यथावद्विदुर ! प्रशाधि प्रज्ञापूर्वं सर्वमजातशत्रोः ।**
**यन्मन्यसे पथ्यमदीनसत्त्व ! श्रेयस्करं ब्रूहि तद्वै कुरूणाम् ॥**

( अन्वयः ) हे विदुर ! त्वं, अजातशत्रोः प्रज्ञापूर्वं, सर्वं, यथावत, मां, प्रशाधि, हे अदीनसत्त्व ! कुरूणां, श्रेयस्करं, यत, पथ्यं मन्यसे, तद्, वै, ब्रूहि ॥ २ ॥

( सुबोधिनी ) हे विदुर ! त्वं = भवान्, न जाताः शत्रवो यस्य तस्याजातशत्रोः = युधिष्ठिरस्य, प्रज्ञा पूर्वं यस्मिंस्तत् प्रज्ञापूर्वं = ज्ञानपूर्वकं, सर्वं = सकलमभिमतं, यथावत् = सम्यक्, मां, प्रशाधि = ज्ञापय, न दीनं सत्त्वं यस्य तत्सम्बुद्धौ हे अदीनसत्त्व ! हे पराक्रमशील ! कुरूणां,

श्रेयस्करं = कल्याणप्रदं, यत्, पथोऽनपेतं पथ्यं = हितकरं, मन्यसे = विचारयसि तत्, वै = अवश्यं, ब्रूहि ॥ २ ॥

( हिन्दी ) हे विदुर ! तुम युधिष्ठिर और कौरवोंका हित जिसमें समझते हो वह विचारकर मुझसे कहो ॥ २ ॥

**पापाशङ्कीपापमेवानुपश्यन्पृच्छामित्वां व्याकुलेनात्मनाऽहम् । कवे ! तन्मे ब्रूहि सर्वं यथावन्मनीषितं सर्वमजातशत्रोः ॥३॥**

( अन्वयः ) पापाशंकी, पापमेव, अनुपश्यन्, अहं, व्याकुलेन, आत्मना, त्वां, पृच्छामि, तत्, हे कवे !, अजातशत्रोः, सर्वं, मनीषितं मे, यथावत्, सर्वं, ब्रूहि ॥ ३ ॥

(सुबोधिनी) पापमाशंकत इति पापाशंकी = अनिष्टशङ्की, पापमेव = अनिष्टमेव, अनुपश्यतीत्यनुपश्यन् = चिन्तयन्, व्याकुलेन = भयोद्विग्नेन आत्मना, अहं, त्वां = भवन्तं, पृच्छामि, तत् = तस्मात् कारणात्, हे कवे ! = हे पण्डित ! अजातशत्रोः = युधिष्ठिरस्य, सर्वं = अखिलं, मनीषितं = विचारितं, मे, यथावत् = सम्यक्, सर्वं = अखिलं ब्रूहि = कथय ॥

( हिन्दी ) अपने पूर्वकृतपापसे सर्वत्र पापकी शंका करनेवाला मैं कुलका विनाश ही देखरहा हूँ, इसीसे शङ्कित और व्याकुल होकर मैं तुमसे पूछता हूँ, हे विद्वान् ! तुम युधिष्ठिरका निश्चय अच्छीतरहसे कहो ॥

विदुर उवाच—

**शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम् ।**
**अपृष्टस्तस्य तद् ब्रूयाद्यस्य नेच्छेत्पराभवम् ॥ ४ ॥**

( अन्वयः ) यस्य, पराभवं, न, इच्छेत्, तस्य, शुभं वा, यदि वा पापं, द्वेष्यं, वा, यदि, वा, प्रियं, अपृष्टः, अपि तद् ब्रूयात् ॥ ४ ॥

( सुबोधिनी ) यस्य = यस्य नरस्य, पराभवं = पराजयं, न, इच्छेत् न अभिलषेत्, तस्य, शुभं = कल्याणकरं, यदि, वा, पापं = अशुभं, वा, द्वेष्यं = अप्रियं, वा प्रियं = प्रियकरं वा भवेत्, तदपि = शुभादि, अपृष्टः, एव, ब्रूयात् = कथयेत् ॥ ४ ॥

( हिन्दी ) विदुरने कहा—जो मनुष्य जिसका पराभव होने देना न चाहता हो उसे उचित है कि वह प्रिय हो या अप्रिय—विना पूछे ही उसे उचित सलाह देदे ॥ ५ ॥

**तस्माद्वक्ष्यामि ते राजन् हितं यत्स्यात् कुरून्प्रति ।**
**वचः श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे ॥ ५ ॥**

( अन्वयः ) तस्माद् हे राजन् ! कुरून् प्रति यत् हितं स्यात्, तत् श्रेयस्करं, धर्म्यं, वचः, ते वक्ष्यामि, ब्रुवतः, मे, तत्, निबोध ॥ ५ ॥

( सुबोधिनी ) तस्माद् = तस्माद्धेतोः, हे राजन् ! कुरून् = त्वत्पुत्रान् प्रतिं, यत, हितं = हितकरं, स्यात्, तत्, श्रेयस्करं = कल्याणकरं, धर्माद्नपेतं धर्म्यं = धर्मयुक्तं, वचः = वचनं, ते = तुभ्यं, वक्ष्यामि = कथयिष्यामि, ब्रुवतः = कथयतः, मे = मत्तः, तत्, निबोध = जानीहि ॥ ५ ॥

( हिन्दी ) आप पूछते हैं इसलिये हे राजन् अब कौरवोंके हितकर और धर्मयुक्त जो कल्याणकी बातें मैं कहूँगा उसे आप ध्यानपूर्वक सुनें॥५॥

**मिथ्योपेतानि कर्माणि सिध्येयुर्यानि भारत ।**
**अनुपायप्रयुक्तानि मास्म तेषु मनः कृथाः ॥ ६ ॥**

( अन्वयः ) हे भारत ! मिथ्योपेतानि, अनुपायप्रयुक्तानि, यानि, कर्माणि, सिध्येयुः, तेषु मनः, मा, कृथाः स्म ॥ ६ ॥

( सुबोधिनी ) हे भारत = धृतराष्ट्र ! मिथ्यया उपेतानि मिथ्योपेतानि कपटयुक्तानि, अनुपायैः प्रयुक्तानि अनुपायप्रयुक्तानि = असदुपायैः सम्पादितानि, यानि, कर्माणि = कार्याणि, सिध्येयुः = सिद्धिं गच्छेयुः, तेषु = कार्येषु, मनः = चेतः, मा कृथाः स्म = न समाधेहि ॥ ६ ॥

( हिन्दी ) हे भारत ! कपटयुक्त द्यूतादिकर्म जो बुरे उपायद्वारा सिद्ध होते हैं उनमें मन न लगाइये ॥ ६ ॥

**तथैव योगविहितं यत्तु कर्म न सिध्यति ।**
**उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः ॥ ७ ॥**

( अन्वयः ) तथैव योगविहितं, उपाययुक्तं, तु, यत् कर्म्म, न सिध्यति मेधावी, तत्र, मनः, न ग्लपयेद् ॥ ७ ॥

( सुबोधिनी ) तथैव = तेनैव प्रकारेण, योगेन विहितं, योगविहितं = युक्तिसम्पादितं, उपायेन युक्तं, उपाययुक्तं = उपयुक्तोपायसहितं यत्, कर्म्म, न, सिध्यति = सिद्धिं न गच्छति, मेधावी = बुद्धिमान्नरः, तत्र = असिद्धे कर्म्मणि, मनः, न ग्लपयेत् = न सन्तापयेत् ॥ ७ ॥

( हिन्दी ) उसी प्रकार प्रयत्न और उपायोंसे किये जाने परभी जो काम सिद्ध नहो, तो उस असफलतासे खिन्न न होना चाहिये ॥ ७ ॥

अनुबन्धानपेक्षेत सानुबन्धेषु कर्मसु ।
सम्प्रधार्य च कुर्वीत न वेगेन समाचरेत् ॥ ८ ॥

( अन्वयः ) सानुबन्धेषु कर्मसु, अनुबन्धान्, अपेक्षेत, सम्प्रधार्य च कुर्वीत, वेगेन, न, समाचरेत् ॥ ८ ॥

( सुबोधिनी ) अनुबन्धेन सहितेषु सानुबन्धेषु = सप्रयोजनेषु, कर्मसु, अनुबन्धान् = प्रयोजनानि, अपेक्षेत = प्रतीक्षेत, 'एवं' सम्प्रधार्य = निश्चित्य, च = एव, कुर्वीत, वेगेन = त्वरया, अविचार्य्यैवेत्यर्थः, किमपि कार्यम् नकुर्वीतेत्यर्थः ॥ ८ ॥

( हिन्दी ) प्रयोजनीय कार्यमें पहले प्रयोजनको सोचे, फिर विचार और निश्चय करके कार्य आरम्भ करे, विना विचार किये सहसा कोई काम न कर बैठे ॥ ८ ॥

अनुबन्धं च सम्प्रेक्ष्य विपाकं चैव कर्मणाम् ।
उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा ॥ ९ ॥

( अन्वयः ) धीरः, कर्मणां, अनुबन्धं, संप्रेक्ष्य, विपाकं, च, एव ( संप्रेक्ष्य ) आत्मनः, च, एव, उत्थानं ( संप्रेक्ष्य ) वा कुर्वीत न वा ( कुर्वीत ) ॥ ९ ॥

( सुबोधिनी ) धीरः = गम्भीरः, सुचतुर इत्यर्थः, कर्मणां, अनुबन्धं

= प्रयोजनं, संप्रेक्ष्य = विचार्य, विपाकं = परिणामञ्च (संप्रेक्ष्य) आत्मनः, च उत्थानं = उद्योगशक्तिं ( संप्रेक्ष्य ) 'तत्' कुर्वीत, न वा कुर्वीत ॥९॥

( हिन्दी ) धीर मनुष्य कार्य मात्रके प्रयोजन तथा उसके फलाफल का विचारकर और अपनी उद्यम शक्तिको देखले फिर चाहे उसे करे या न करे ॥ ९ ॥

यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये ।
कोशे जनपदे दण्डे न स राज्येऽवतिष्ठते ॥ १० ॥

( अन्वयः ) यः, स्थाने, वृद्धौ, तथा, क्षये, कोशे, जनपदे, दण्डे, प्रमाणं न जानाति, सः, राज्ये, न, अवतिष्ठते ॥ १० ॥

( सुबोधिनी ) यः = राजा, स्थाने = स्थानसम्बन्धे, वृद्धौ = आये, तथा, क्षये = व्यये, कोशे, जनपदे = राज्ये, दण्डे = सैन्ये, प्रमाणं = मानं; ( आयव्ययादीनां प्रमाणं ) न जनाति, सः = स राजा, राज्ये, न अवतिष्ठते = राज्यम् , अधिकर्तुं न शक्नोति ॥ ९ ॥

( हिन्दी ) जो राजा, स्थान; वृद्धि, व्यय, कोष, जनपद और दण्डके प्रमाणको नहीं जानता, वह राज्यासनपर बैठ नहीं सकता ॥ १० ॥

यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति ।
युक्तो धर्मार्थयोर्ज्ञाने स राज्यमधिगच्छति ॥ ११ ॥

( अन्वयः ) यः, तु, यथोक्तानि, एतानि, प्रमाणानि, अनुपश्यति, धर्मार्थयोः, ज्ञाने युक्तः, सः राज्यं, अधिगच्छति ॥ ११ ॥

( सुबोधिनी ) यः = राजा, यथोक्तानि = पूर्वमुक्तानि, एतानि, प्रमाणानि, अनुपश्यति = जानाति, धर्मश्चार्थश्च धर्मार्थौ तयोः धर्मार्थयोः ज्ञाने = विवेचने, युक्तः = तत्परः. सः, राज्यं, अधिगच्छति = प्राप्नोति, राजा भवितुमर्हतीत्यर्थः ॥ ११ ॥

( हिन्दी ) जो राजा ऊपर कही हुई बातोंके प्रमाणों और धर्म तथा अर्थको जानता है वह राजा, राज्यको अच्छी प्रकार चला सकता है॥ ११ ॥

५

न राज्यं प्राप्तमित्येव वर्तितव्यमसाम्प्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ १२ ॥

( अन्वयः ) "राज्यं प्राप्तं" इत्येव, असाम्प्रतं, न, वर्तितव्यम्, हि, अविनयं, जरा, उत्तमं, रूपं, इव, श्रियं, हन्ति ॥ १२ ॥

( सुबोधिनी ) "राज्यं प्राप्तं" इत्येव = इति मत्वैव, असाम्प्रतं = अयुक्तं, यथेच्छमित्यर्थः, यथातथा, न, वर्तितव्यं, हि = यतः, जरा = वृद्धावस्था, उत्तमं = सुन्दरं, रूपं = स्वरूपं, इव, अविनयः = अन्यायः, श्रियं = राजलक्ष्मीं, हन्ति = नाशयति ॥ १२ ॥

( हिन्दी ) राज्य मिलगया, इतने ही से उसे इच्छानुसार न बरतना चाहिये, जो राजा अन्याय करता है उसकी लक्ष्मी इस प्रकार नष्ट हो जाती है जैसे वृद्धावस्था मनोहर रूपको नष्ट कर देती है ॥ १२ ॥

भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम् ।
लोभाभिपाती ग्रसते नानुबन्धमवेक्षते ॥ १३ ॥

( अन्वयः ) लोभाभिपाती, मत्स्यः, भक्ष्योत्तमप्रतिच्छन्नं, आयसं, बडिशम्, ग्रसते, अनुबन्धं न, अवेक्षते ॥ १३ ॥

( सुबोधिनी ) लोभादभिपतितुं शीलं यस्यासौ, लोभाभिपाती, मत्स्यः, भक्ष्योत्तमे प्रतिच्छन्नं भक्ष्योत्तमप्रतिच्छन्नं = उत्तमभक्ष्यावृतं, आयसं = लौहनिर्मितं, बडिशम् = कंटकम्, ग्रसते = अत्ति, अनुबन्धं = पश्चाद् बन्धनं, न, अवेक्षते = न पश्यति ॥ १३ ॥

( हिन्दी ) लोभसे दौड़कर मछली उत्तम खाद्यपदार्थमें छिपी हुई लोहेकी कँटियाको अन्नकी इच्छासे निगल जाती है पीछेसे अपने फँस जानेको नहीं देखती ॥ १३ ॥

यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता ॥ १४ ॥

( अन्वयः ) यद्, ग्रस्यं, ग्रसितुं, शक्यं, ग्रस्तं, च, यत्, परिणमेत्, परिणामे, च यत्, हितं, ( भवेत् ) भूतिं, इच्छता, तद्, आद्यम् ॥१४॥

( सुबोधिनी ) यत्, ग्रसितुं योग्यं ग्रस्यं = खाद्यं, ग्रसितुं = खादितुं शक्यं, ग्रस्तं = भक्षितं, च यत्, परिणमेत् = जीर्णं भवेत्, परिणामे = परिपाकावस्थायाम्, च, यद् = यद्भोजनं, हितं = हितकरं (भवेदिति शेषः) भूतिं = कल्याणं, इच्छता, नरेण, तद् भोजनं, आद्यं = भक्ष्यम् ॥ १४ ॥

( हिन्दी ) इसलिये जो खानेके लायक हो, और जो खानेके बाद पच सके और जो पचनेपर हितकारी हो वही खाना खाना चाहिये कल्याण चाहने वालेने सदा इसपर ध्यान रखना चाहिये ॥ १४ ॥

**वनस्पतेरपक्कानि फलानि प्रचिनोति यः ।**
**स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति ॥१५॥**

( अन्वयः ) यः, वनस्पतेः, अपक्वानि, फलानि, प्रचिनोति, सः, तेभ्यः, रसं, न, आप्नोति, अस्य बीजं च विनश्यति ॥ १५ ॥

( सुबोधिनी ) यः, वनस्पतेः 'वृक्षादित्यर्थः' अपक्वानि, फलानि, प्रचिनोति = सङ्गृह्णाति, सः, तेभ्यः = फलेभ्यः, रसं, न, आप्नोति = लभते, 'प्रत्युत' अस्य = वनस्पतेः, बीजञ्च, विनश्यति = नष्टं भवति ॥

( हिन्दी ) जो कच्चे फलोंको तोड़ता है उसे रस तो मिलता ही नहीं उलटे वह उसके बीजसे भी हाथ धो बैठता है ॥ १५ ॥

**यस्तु पक्कमुपादत्ते काले परिणतं फलम् ।**
**फलाद्रसं स लभते बीजाच्चैव फलं पुनः ॥ १६ ॥**

( अन्वयः ) यः, तु, काले, परिणतं, पक्वं, फलं, उपादत्ते, सः, फलाद्, रसं, लभते, बीजात्, च, एव पुनः, फलम् ( उपादत्ते ) ॥१६॥

( सुबोधिनी ) यः, तु, जनः, काले = अवसरे, परिणतं = पक्वं, फलं, उपादत्ते, गृह्णाति, सः फलाद्, रसं, लभते, आप्नोति, बीजाद्, च, पुनः, 'अपि' फलं ( लभत इति शेषः ) ॥ १६ ॥

( हिन्दी ) 'इसी तरह' जो मनुष्य समयपर पके हुये फलको लेता है वह उसका रस भी पाता है और बीज भी बना रहता है जिससे पुनः फलकी आशा रहती है ॥ १६ ॥

यथा मधु समादत्ते रक्षन् पुष्पाणि षट्पदः ।
तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥ १७ ॥

( अन्वयः ) यथा, षट्पदः, पुष्पाणि, रक्षन्, मधु, समादत्ते, तद्वत् अविहिंसया, मनुष्येभ्यः, अर्थान्, आदद्यात् ॥ १७ ॥

( सुबोधिनी ) यथा, षट्पदः = भ्रमरः, पुष्पाणि, रक्षन् = परिपालयन्, मधु = पुष्परसं, समादत्ते = गृह्णाति, तद्वत्, 'राजा' अविहिंसया = जीवहिंसां विना, मनुष्येभ्यः, अर्थान् = धनानि, आदद्यात् = गृह्णीयात् ॥ १७ ॥

( हिन्दी ) जैसे भौंरा फूलोंको बनाये रखता हुआ केवल उसका रस ले लेता है, उसी प्रकार राजा प्रजाको बनाये रखकर सहज उपायसे उनसे धन वसूल कर लेता है प्रजाको मारता या सताता नहीं ॥ १७ ॥

पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवारामे न यथाङ्गारकारकः ॥ १८ ॥

( अन्वयः ) आरामे, मालाकारः, इव, पुष्प, पुष्पं, विचिन्वीत, अंगारकारकः, यथा, मूलच्छेदं न कारयेत् ॥ १८ ॥

( सुबोधिनी ) आरामे = उद्याने, मालां करोतीति मालाकारः, इव, पुष्पं पुष्पं विचिन्वीत = एकमेकं कृत्वा केवलं पुष्पाण्येव गृह्णीयात्, अंगारं करोतीति अंगारकारकः = इङ्गालकारः, यथा = इव, मूलस्य छेदं = मूलच्छेदं = समूलनाशं न कारयेत् ॥ १८ ॥

( हिन्दी ) राजा मालीकी भाँति बागसे केवल फूल-फूल ले लेवे, उसकी जड़ न काट डाले, जैसे—कोयला बुझाने वाला जड़से काटकर पेड़को जला देता है वैसे प्रजाका संहार करना ठीक नहीं ॥ १८ ॥

किन्नु मे स्यादिदं कृत्वा किन्नु मे स्यादकुर्वतः ।
इति कर्माणि संचिन्त्य कुर्याद्वा पुरुषो न वा ॥१९॥

( अन्वयः ) इदं, कृत्वा, मे, किं, स्यात्, नु, अकुर्वतः, मे, किं, स्यात्, नु, इति कर्माणि संचिन्त्य पुरुषः, कुर्यात्, वा, नवा ( कुर्यात् )॥

( सुबोधिनी ) इदं, कार्यं, कृत्वा, मे, किं=किंफलं, स्यात्, नु= इति वितर्के, अकुर्वतः=न सम्पादयतः, मे, किं स्यात्, नु, इति=इत्थं, कर्माणि, लाभालाभतारतम्येन कर्तव्याकर्तव्यकर्म्माणि, संचिन्त्य=विचार्य, पुरुषः, कुर्यात्, वा, न वा कुर्यात् ॥ १९ ॥

( हिन्दी ) हर मनुष्यको चाहिये कि किसी कार्यके आरम्भ करनेके पहले वह इस बातको सोचले कि इसके करनेसे क्या लाभ होगा और न करनेसे क्या हानि होगी । इस तरह सोंचनेके बाद फिर वह चाहे उस कामको करे या न करे ॥ १९ ॥

अनारभ्या भवन्त्यर्थाः केचिन्नित्यं तथाऽगताः ।
कृतः पुरुषकारो हि भवेद्येषु निरर्थकः ॥ २० ॥

( अन्वयः ) तथा, नित्यं, आगताः, केचिद्, अर्थाः, अनारम्याः, भवन्ति, हि, येषु कृतः, पुरुषकारः, निरर्थकः, भवति ॥ २० ॥

( सुबोधिनी ) तथा=तेनैव प्रकारेण, नित्यं, अगताः=अप्राप्ताः, केचिद्, अर्थाः=प्रबलैः सह वैरादयः, न आरब्धुं योग्याः अनारम्याः= आरब्धुमयोग्याः, भवन्ति हि, येषु=अर्थेषु, कृतः, 'अपि' पुरुषकारः= उद्योग इत्यर्थः, निरर्थकः, भवति ॥ २० ॥

(हिन्दी) कुछ मनोरथ ऐसे हैं जो अप्राप्त हैं, उसकेलिये प्रयत्न नहीं करना चाहिये, क्योंकि उनकार्योंमें किया हुआ प्रयत्नभी निष्फल हो जाता है॥

प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥ २१ ॥

( अन्वयः ) यस्य, प्रसादः, निष्फलः, क्रोधः, च, अपि निरर्थकः, ( प्रजाः ), स्त्रियः, षण्ढं, पतिं, इव तं भर्त्तारं, न इच्छन्ति ॥ २१ ॥

( सुबोधिनी ) यस्य = यस्य राज्ञः, प्रसादः = अनुग्रहः, निष्फलः = व्यर्थः, क्रोधः, अपि, निरर्थकः, तत्कोपेन न किञ्चिद् भयमित्यर्थः, स्त्रियः, षण्ढं = नपुंसकम्, पतिं, इव, 'प्रजाः' तं, भर्त्तारं = पालकं राजानं, न, इच्छन्ति = नाभिलषन्ति ॥ २१ ॥

( हिन्दी ) जिसके प्रसन्न होनेसे प्रजाका कोई लाभ नहीं और क्रुद्ध होनेसे प्रजाकी कोई हानि नहीं, ऐसे राजाको प्रजा अपना स्वामी बनाना नहीं चाहती, जैसे स्त्रियाँ नपुंसक पति को ॥ २१ ॥

काँश्चिदर्थान्नरः प्राज्ञो लघुमूलान्महाफलान् ।
क्षिप्रमारभते कर्तुं न विघ्नयति तादृशान् ॥ २२ ॥

( अन्वयः ) प्राज्ञः, नरः, लघुमूलान्, महाफलान्, कांश्चिद्, अर्थान्, कर्तुं, क्षिप्रं, आरभते, तादृशान्, न, विघ्नयति ॥ २२ ॥

( सुबोधिनी ) प्राज्ञः, नरः, लघु स्वल्पं मूलं येषान्तान् लघुमूलान्, अल्पोपायानित्यर्थः, महत् फलं येषान्तान्, महाफलान्, कांश्चिद् अर्थान् = कार्याणि, कर्तुं = विधातुं, क्षिप्रं = शीघ्रं, आरभते = उपक्रमते, तादृशान् = लघुमूलमहाफलान्, न, विघ्नयति = न विलंबयति ॥ २२ ॥

( हिन्दी ) कुछ ऐसे कार्य होते हैं जिनकी जड़ (आरम्भ) छोटी और फल भारी होता है, बुद्धिमान् मनुष्य ऐसे कामोंमें देर नहीं लगाते, झटपट उसे कर डालते हैं ॥ २२ ॥

ऋजु पश्यति यः सर्वं चक्षुषानुपिबन्निव ।
आसीनमपि तूष्णीकमनुरज्यन्ति तं प्रजाः ॥ २३ ॥

( अन्वयः ) यः, चक्षुषा, अनुपिबन्, इव, सर्वं, ऋजु, पश्यति, तूष्णीकं, आसीनं, अपि, तं, प्रजाः, अनुरज्यन्ति ॥ २३ ॥

( सुबोधिनी ) यः = राजा, चक्षुषा = नेत्रेण, अनुपिबतीत्यनुपिबन्,

इव, अतिस्निग्धया दृष्ट्या पश्यन्नित्यर्थः, सर्वं=अखिलं जनं, ऋजु पश्यति =दर्शनेनैव प्रीणयतीत्यर्थः, तूष्णीकं=मौनस्थितं, निर्व्यापारमपीत्यर्थः, तं, राजानं, प्रजाः, अनुरज्यन्ति=अनुरक्ता भवन्तीत्यर्थः ॥ २३ ॥

( हिन्दी ) जो राजा स्नेहपूर्ण सरल दृष्टिसे सबको देखता है वह चुपचाप ही क्यों न बैठा हो, फिरभी उसपर प्रजा अनुरक्त रहती है ॥२३॥

**सुपुष्पितः स्यादफलः फलितः स्याद्दुरारुहः ।**
**अपक्वः पक्वसंकाशो न तु शीर्येत कर्हिचित् ॥ २४ ॥**

( अन्वयः ) सुपुष्पितः, अफलः, स्यात्, फलितः, दुरारुहः, स्यात्, अपक्वः, पक्वसंकाशः स्यात्, कर्हिचित् तु न शीर्येत ॥ २४ ॥

( सुबोधिनी ) शोभनानि पुष्पाणि, संजातान्यस्य सः सुपुष्पितः= संजातपुष्पः, 'अपि' न वर्त्तन्ते फलानि यस्य सोऽफलः=फलरहितः, स्यात्, राजा केवलं प्रीतिमेव दर्शयेत्, न तु धनदानादिलक्षणं प्रीतिफलमित्यर्थः, फलितः=संजातफलः 'अपि' दुःखेनारुह्यत इति दुरारुहः= दुष्प्राप्यः, स्यात्, दत्तेऽपि धने भृत्यवश्यो न भवेदित्यर्थः, अपक्वः= अपरिणतः, 'अपि' पक्वसंकाशः=परिपक्वः, इव, आत्मानं दर्शयेत्, अशक्तोऽप्यन्तः बहिः शक्तिं प्रदर्शयेदित्यर्थः, कर्हिचित्=कदापि, न, शीर्येत=न नश्येत् ॥ २४ ॥

( हिन्दी ) राजाको चाहिये कि वृक्षकी तरह अच्छी तरह फूलकरभी ( वाणी और आँखोंसे अनुग्रह दिखाकर भी ) फलहीन रहे ( आश्रित भृत्योंका धन दान द्वारा मिजाज बढ़ाकर न रक्खे ) और फलकर भी ( भृत्योंको धन देकर भी ) दुरारोह बनारहे ( भृत्योंके वशमें न हों ) कच्चा होकर भी पका सा देख पड़े ( भीतरसे निर्बल होनेपरभी ऊपरसे अपनी प्रबलता दिखाता रहे, कभीं अपने मनकी कमजोरी दूसरों पर जाहिर न करे ) इससे कभीं नाश नहीं होता ॥ २४ ॥

**चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।**
**प्रसादयति यो लोकं तं लोकोऽनुप्रसीदति ॥ २५ ॥**

( अन्वयः ) यः, मनसा, चक्षुषा, वाचा, कर्मणा च चतुर्विधं लोकं, प्रसादयति, लोकः, तं, अनुप्रसीदति ॥ २५ ॥

( सुबोधिनी ) यः = राजा, मनसा, चक्षुषा = प्रीतिदृष्ट्या, वाचा = प्रियवचनेन, कर्मणा = जनहितकरेण कार्येण, चतुर्विधं = चतुःप्रकारेणेत्यर्थः, लोकं, प्रसादयति, लोकः, तं = तथाविधं राजानं, अनुप्रसीदति ॥

( हिन्दी ) जो राजा मनसे, प्रीतिपूर्वक दृष्टिसे, प्रियवचनोंसे और जनहित कार्योंसे प्रजाको अनुरंजित करता है, प्रजा उसपर प्रसन्न रहती है॥

यस्मात्त्रस्यन्ति भूतानि मृगव्याधान्मृगा इव ।
सागरान्तामपि महीं लब्ध्वा स परिहीयते ॥ २६ ॥

( अन्वयः ) यस्मात्, मृगव्याधात्, मृगाः, इव, भूतानि, त्रस्यन्ति, सागरान्तां, अपि महीं लब्ध्वा सः ( जनैः ) परिहीयते ॥ २६ ॥

( सुबोधिनी ) यस्मात् = यस्मात् राज्ञः, मृगाणां व्याधस्तस्माद् मृगव्याधात् = मृगलुब्धकात्, मृगाः = हरिणाः; इव, भूतानि = प्रजाः, त्रस्यन्ति = बिभ्यति, सागरोऽन्तो यस्यास्तां सागरान्तां = सागरपर्यन्तां, अपि, महीं = भूमिं, लब्ध्वा = प्राप्य, 'अपि' जनैरिति शेषः, परिहीयते = त्यज्यते ॥ २६ ॥

( हिन्दी ) बहेलियासे जैसे मृग डरते हैं वैसे ही जिस राजासे प्रजा हर समय भयभीत रहा करती है, वह राजा सारी पृथ्वीका राज्य पाकर भी उससे भ्रष्ट हो जाता है ॥ २६ ॥

पितृपैतामहं राज्यं प्राप्तवान्स्वेन कर्मणा ।
वायुरभ्रमिवासाद्य भ्रंशयत्यनये स्थितः ॥ २७ ॥

( अन्वयः ) यः, पितृपैतामहं राज्यं प्राप्तवान्, अनये स्थितः, 'सः' वायुः, अभ्रम्, आसाद्य, इव, भ्रंशयति ॥ २७ ॥

( सुबोधिनी ) 'यः' पितृपैतामहं = पितृपारम्पर्यागतं, राज्यं, प्राप्तवान् = लब्धवान्, 'सः' अनये = अनीतौ, स्थितः = वर्तमानः, वायुः, अभ्रं = मेघं, आसाद्य, इव, स्वेन कर्मणा, भ्रंशयति—नाशयति॥ २७ ॥

(हिन्दी) जो राजा बाप दादोंके राज्यको पाया हुआ है, वह अपनी करतूतसे उसे उसी तरह चौपटकर देता है जैसे आँधी बादलोंको छिन्न-भिन्न कर डालती है ॥ २७ ॥

धर्ममाचरतो राज्ञः सद्भिश्चरितमादितः ।
वसुधा वसुसंपूर्णा वर्धते भूतिवर्धनी ॥ २८ ॥

(अन्वयः) आदितः, सद्भिः, चरितं, धर्मं, आचरतः, राज्ञः, भूतिवर्द्धिनी, वसुसम्पूर्णा, वसुधा, वर्धते ॥ २८ ॥

(सुबोधिनी) आदितः, चिरकालादित्यर्थः, सद्भिः = सज्जनैः, चरितं = आचरितं, धर्मं, आचरतः = पालयतः, राज्ञः = नृपस्य, भूतिं वर्धयतीति भूतिवर्द्धिनी = ऐश्वर्यशालिनी, वसुभिः सम्पूर्णा वसुसम्पूर्णा = धनधान्यपूर्णा, वसुधा, वर्धते ॥ २८ ॥

(हिन्दी) जो राजा अपने पूर्वजोंसे आचरित धर्मका पालन करता है, उसके राज्यमें पृथ्वी धन-रत्नसे पूर्ण होती है और उसके ऐश्वर्यको बढ़ाती है ॥ २८ ॥

अथ संत्यजतो धर्ममधर्मं चानुतिष्ठतः ।
प्रतिसंवेष्टते भूमिरग्नौ चर्माहितं यथा ॥ २९ ॥

(अन्वयः) अथ, धर्मं, संत्यजतः, अधर्मं, च, अनुतिष्ठतः, (नृपस्य) भूमिः, अग्नौ, आहितं, चर्म, यथा प्रतिसंवेष्टते ॥ २९ ॥

(सुबोधिनी) अथ = अनन्तरं, धर्मं = धर्ममार्गं, संत्यजतीति तस्य संत्यजतः = तिरस्कुर्वतः, अधर्मं = पापमार्गं, अनुतिष्ठतीति तस्यानुतिष्ठतः = आचरतः, नृपस्य, भूमिः = वसुधा, अग्नौ, आहितं = क्षिप्तं, चर्म, यथा = इव, प्रतिसंवेष्टते = संकुचते, बहुफलं न प्रयच्छतीत्यर्थः ॥ २९ ॥

(हिन्दी) जो राजा धर्मको छोड़ अधर्मको स्वीकार करता है उसका साम्राज्य आगमें पड़े चमड़ेकी तरह सिमट जाता है ॥ २९ ॥

य एव यत्नः क्रियते परराष्ट्रविमर्दने ।
स एव यत्नः कर्तव्यः स्वराष्ट्रपरिपालने ॥ ३० ॥

( अन्वयः ) यः, एव, यत्नः, परराष्ट्रविमर्दने, क्रियते सः, एव, यत्नः स्वराष्ट्रपरिपालने कर्त्तव्यः ॥ ३० ॥

( सुबोधिनी ) यः, एव, यत्नः = उपायः, परराष्ट्रस्य विमर्दने परराष्ट्रविमर्दने = रिपुराज्यनाशने, क्रियते = विधीयते, सः, एव, यत्नः, स्वस्य राष्ट्रस्य परिपालने = स्वराष्ट्ररक्षणे, कर्त्तव्यः = विधेयः ॥ ३० ॥

( हिन्दी ) बुद्धिमान् राजा शत्रुके राज्यको हानि पहुँचानेके लिये जैसा प्रयत्न करते हैं वैसे ही अपने राज्यकी रक्षाके लिये भी करना चाहिये

धर्मेण राज्यं विन्देत धर्मेण परिपालयेत् ।
धर्ममूलां श्रियं प्राप्य न जहाति न हीयते ॥ ३१ ॥

( अन्वयः ) धर्म्मेण राज्यं विन्देत, धर्मेण परिपालयेत्, धर्ममूलां, श्रियं, प्राप्य, न जहाति, न परिहीयते ॥ ३१ ॥

( सुबोधिनी ) धर्मेण = धर्ममार्गेण, राज्यं, विन्देत = प्राप्नुयात्, धर्मेण, परिपालयेत् = रक्षेत्, धर्ममूलां = धर्ममार्गाधिगतां, श्रियं = लक्ष्मीं, प्राप्य, ( नृप इति शेषः ) न, जहाति = तां न त्यजति, नच, परिहीयते = लक्ष्म्या, न त्यज्यते ॥ ३१ ॥

( हिन्दी ) जो राजा धर्मसे राज्य प्राप्त करता है, और धर्म ही से उसकी रक्षा भी करता है उसको राजलक्ष्मी कभी नहीं छोड़ती ॥ ३१ ॥

अप्युन्मत्तात्प्रलपतो बालाच्च परिजल्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥ ३२ ॥

( अन्वयः ) प्रलपतः, उन्मत्तात्, परिजल्पतः, बालात्, च, अपि, अश्मभ्यः, काञ्चनं इव, सर्वतः सारं, आदद्यात् ॥ ३२ ॥

( सुबोधिनी ) प्रलपतीति तस्मात् प्रलपतः = अनर्गलं वाक्यं कथयतः,

उन्मत्तात् = मदोन्मत्तात्, परिजल्पतीति तस्मात् परिजल्पतः = निरर्थकं वदतः, बालादपि, अश्मभ्यः = पाषाणेभ्यः, काञ्चनं = स्वर्णं, इव सर्वतः, सारं = तत्त्वं, आदद्यात् = गृह्णीयात् ॥ ३२ ॥

( हिन्दी ) जैसे पत्थरमेंसे सोना निकाला जाता है उसीप्रकार राजाको पागलसे और उटपटांग बकवाद करने वाले बालकसे भी अपने मतलबकी बात निकालनी चाहिये ॥ ३२ ॥

**सुव्याहृतानि सूक्तानि सुकृतानि ततस्ततः ।**
**सञ्चिन्वन्धीर आसीत शिलाहारी शिलं यथा ॥३३॥**

( अन्वयः ) धीरः, सुव्याहृतानि, सूक्तानि, ततः, ततः, सुकृतानि सञ्चिन्वन्, शिलाहारी, शिलं, यथा, आसीत् ॥ ३३ ॥

( सुबोधिनी ) धीरः = गम्भीरः, सुष्ठु व्याहृतानि सुव्याहृतानि = पाण्डित्यपूर्णवचनानि, सूक्तानि = शोभनतयोक्तानि, ततस्ततः = तेभ्यः तेभ्यः, सुकृतानि = पित्राद्युपदिष्टसत्कर्माणि, संचिनोतीति संचिन्वन् = गृह्णन्, शिलाहारी = उञ्छवृत्तिजीवी 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' इति यादवः, शिलं = कणं यथा = इव, आसीत्, त्वमप्यस्मदादिवाक्यात् सारं गृह्णीष्वेतिभावः ॥ ३३ ॥

( हिन्दी ) उञ्छ वृत्ति ( खेतमें इधर उधर पड़े हुये अन्नके दानोंको चुनकर निर्वाह करना ) से जीविका चलाने वाले तपस्वी, जैसे दानें बीनते हैं उसी तरह धीर पुरुषोंको भी बड़े आदमियोंके उपदेश और सत्कार्य चुन चुन कर ग्रहण करने चाहिये ॥ ३३ ॥

**गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः ।**
**चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ ३४ ॥**

( अन्वयः ) गावः, गन्धेन, पश्यन्ति, ब्राह्मणाः, वेदैः पश्यन्ति, राजानः, चारैः, पश्यन्ति, इतरे जनाः, चक्षुर्भ्याम् ( पश्यन्ति ) ॥ ३४ ॥

( सुबोधिनी ) अतिस्पष्टार्थः ॥ ३४ ॥

( हिन्दी ) गायें गन्धसे, ब्राह्मण वेदोंसे, राजा जासूसोंसे, अन्यलोग आखोंसे देखते हैं। यहाँ इसके कहनेका मतलब यह है कि तुमभी पाण्डवोंका बल जाननेके लिये जासूसोंको नियुक्त करो ॥ ३४ ॥

भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
अथ या सुदुहा राजन्नैव तां वितुदन्त्यपि ॥ ३५ ॥

( अन्वयः ) हे राजन् ! या, गौः, दुर्दुहा भवति, सा, भूयांसं, क्लेशं, लभते, अथ, या, सुदुहा (भवति) (जनाः) तां, न एव, वितुदन्ति ॥ ३५॥

( सुबोधिनी ) हे राजन् ! या, गौः, दुःखेन दुह्यत इति दुर्दुहा = दुःखेन दोग्धुं योग्या, भवति, सा = गौः, भूयासं, क्लेशं = दुःखं, लभते, अथ = पक्षान्तरे, या, गौः, सुदुहा = सुखेन दोग्धुं योग्या ( भवतीति शेषः ) जनाः, तां, न, एव, वितुदन्ति = न पीड़यन्ति ॥ ३५ ॥

( हिन्दी ) जो गाय दुहनेके समय कष्ट देती है उसे बहुत क्लेश सहने पड़ते हैं, और जो सहजही दूहने देती है उसे कोई क्लेश नही देता॥

यदतप्तं प्रणमति न तत्सन्तापयन्त्यपि ।
यच्च स्वयं नतं दारु न तत्सन्नमयन्त्यपि ॥ ३६ ॥
एतयोपमया धीरः सन्नमेत बलीयसे ।
इन्द्राय स प्रणमते नमते यो बलीयसे ॥ ३७ ॥

( अन्वयः ) यत्, अतप्तं, प्रणमति, तत् ( जनाः ) नापि, सन्तापयन्ति, यच्च, दारु, स्वयं, नतं, तदपि, न सन्नमयन्ति एतया, उपमया, धीरः, बलीयसे, सन्नमेत, यः, बलीयसे, नमते, सः, इन्द्राय, प्रणमते ॥ ३६॥ ३७॥

( सुबोधिनी ) यद् = द्रव्यं, अतप्तं तापं विनेत्यर्थः, प्रणमति = नतं भवति, तद्, द्रव्यमितिशेषः, जनाः, न, सन्तापयन्ति, यच्च, दारु = काष्ठं, स्वयं, नतमस्ति, तद् = दारु, न = नैव, सन्नमयन्ति = नतं न कुर्वन्ति, एतया = उक्तया, उपमया = सादृश्येन, धीरः = धीरपुरुषः, बलीयसे = बलवते, सन्नमेत = प्रणमेत, यः, बलीयसे = बलवते, नमते = नतो भवति, सः,

इन्द्राय प्रणमते = नमस्करोति, पाण्डवान् प्रति त्वया नम्रीभवितव्यं, तेन बलाधिष्ठात्री देवता इन्द्रश्च त्वामनुग्रहीष्यतीति भावः ॥ ३६ ॥ ३७ ॥

( हिन्दी ) जो बिना ताप पहुचाये ही झुक जाता है उसे ताप न पहुँचाना चाहिये । जो लकड़ी स्वयं झुकी है उसे कोई झुकाता नहीं । इस बातको ध्यानमें रखकर धीर पुरुषको अपनेसे बलवानके आगे झुकना चाहिये, जो प्रबलसे झुकता है वह बलके अधिष्ठाता देवता इन्द्रको प्रणाम करता है ॥ ३६ ॥ ३७ ॥

पर्जन्यनाथाः पशवो राजानो मन्त्रिबान्धवाः ।
पतयो बान्धवाः स्त्रीणां ब्राह्मणा वेदबान्धवाः ॥३८॥

( अन्वयः ) पशवः, पर्जन्यनाथाः, राजानः, मंत्रिबान्धवाः, स्त्रीणां, बान्धवाः, पतयः, ब्राह्मणाः, वेदबान्धवाः ॥ ३८ ॥

( सुबोधिनी ) पशवः = गोप्रभृतयः, पर्जन्यः नाथो येषान्ते पर्जन्यनाथाः = मेघपतयः ( पशुभ्यस्तृणादीनामुत्पादकत्वात् ) राजानः, मंत्रिणः बान्धवा येषान्ते मंत्रिबान्धवाः = मंत्रिसहायाः, स्त्रीणां, बान्धवाः = सहायकाः, 'तासां' पतयः, ब्राह्मणाः, वेदाः बान्धवा येषान्ते वेदबान्धवाः = वेदसहायाः, ( भवन्तीति शेषः ) ॥ ३८ ॥

( हिन्दी ) घास चारा इत्यादि उत्पन्न कर पालने वाले मेघ पशुओं के स्वामी कहलाते हैं, राजाओंके बन्धु मन्त्री लोग हैं, स्त्रियोंके मित्र उनके पति हैं और ब्राह्मणोंके सहायक वेद माने गये हैं ॥ ३८ ॥

सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥ ३९ ॥

( अन्वयः ) धर्मः, सत्येन, रक्ष्यते, विद्या, योगेन, रक्ष्यते, रूपं, मृजया, रक्ष्यते, कुलं, वृत्तेन, रक्ष्यते ॥ ३९ ॥

( सुबोधिनी ) धर्मः, सत्येन = सत्यपालनेन, रक्ष्यते, विद्या, योगेन

=अभ्यासेन, रक्ष्यते, रूपं=सौन्दर्यं, मृजया=उद्वर्त्तनादिना मार्जनेन, रक्ष्यते, कुलं, वृत्तेन=सदाचारेण, रक्ष्यते ॥ ३९ ॥

(हिन्दी) सत्यसे धर्मकी, अभ्याससे विद्याकी, सफाई, रखनेसे रूपकी और सदाचारसे कुलकी रक्षा होती है ॥ ३९ ॥

मानेन रक्ष्यते धान्यमश्वान् रक्षत्यनुक्रमः ।
अभीक्ष्णदर्शनं गाश्च स्त्रियो रक्ष्याः कुचैलतः ॥४०॥

(अन्वयः) मानेन, धान्यं, रक्ष्यते, अनुक्रमः, अश्वान्, रक्षति, अभीक्ष्णदर्शनं, गाः, रक्षति, स्त्रियः, कुचैलतः, रक्ष्याः (भवन्ति) ॥ ४० ॥

(सुबोधिनी) मानेन=तुलादिपरिमाणेन, धान्यं=अन्नं, रक्ष्यते, अनुक्रमः=व्यायामशिक्षादिः, अश्वान्=घोटकान्, रक्षति, अभीक्ष्णदर्शनं=वारंवारमवलोकनं, गाः, रक्षति, स्त्रियः, कुचैलतः=मलिनवस्त्रादितः, रक्ष्याः=रक्षणीयाः, (भवन्तीति शेषः) ॥ ४० ॥

(हिन्दी) परिमाणसे अन्न आदिपदार्थ, चलाने और कसरत करानेसे घोड़े, बार बारकी देखभालसे गायें और मैले वस्त्र (सज धज न करने) से स्त्रियाँ सुरक्षित रहती हैं ॥ ४० ॥

न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।
अन्त्येष्वपि हि जातानां वृत्तमेव विशिष्यते ॥ ४१ ॥

(अन्वयः) वृत्तहीनस्य कुलं न प्रमाणम्, इति मे मतिः, हि, अन्त्येषु, अपि जातानां, वृत्तं, एव, विशिष्यते ॥ ४१ ॥

(सुबोधिनी) वृत्तेन हीनस्य वृत्तहीनस्य=सदाचारहीनस्य, 'श्रेष्ठत्वे' कुलं=कुटुम्बं, न, प्रमाणम्, इति=इत्थं, मतिः=विचारः, हि=यस्मात् कारणात्, अन्त्येषु=नीचकुलेषु, अपि, जातानां=उत्पन्नानाम्, वृत्तं=सदाचारः, एव, विशिष्यते=विशेषतां लभते ॥ ४१ ॥

(हिन्दी) हे राजन्! जो सदाचारसे शून्य हैं उनकी श्रेष्ठताका कारण उनका कुल नहीं माना जा सकता, नीचकुलमें उत्पन्नभी मनुष्य अच्छे चरित्रके कारण श्रेष्ठ माना जाता है ॥ ४१ ॥

य ईर्षुः परवित्तेषु रूपे वीर्ये कुलान्वये।
सुखसौभाग्यसत्कारे तस्य व्याधिरनन्तकः ॥ ४२ ॥

( अन्वयः ) यः, परवित्तेषु, रूपे, वीर्ये, कुलान्वये, सुखसौभाग्य-सत्कारे, ईर्षुः, तस्य, अनन्तकः, व्याधिः ॥ ४२ ॥

( सुबोधिनी ) यः, परस्य वित्तेषु परवित्तेषु=परद्रव्येषु, रूपे=सौन्दर्ये, वीर्ये=पराक्रमे, कुलान्वये=कुलपरम्परायां, सुखसौभाग्य-सत्कारे=सुखे सौभाग्ये सत्कारे च, ईर्षुः=मत्सरी, तस्य, अनन्तकः=अपरिमितः, व्याधिः=रोगः ( उत्पद्यत इति शेषः ) ॥ ४२ ॥

( हिन्दी ) जो मनुष्य, दूसरेके धन, रूप, पराक्रम, कुल, सुख, सौभाग्य, और सत्कारको देखकर ईर्ष्या करता है उसे अनन्त व्याधियाँ घेरे रहा करती हैं, उसे स्वप्नमें भी शान्ति नहीं मिलती ॥ ४२ ॥

अकार्यकारणाद्भीतः कार्याणां च विवर्जनात्।
अकाले मन्त्रभेदाच्च येन माद्येन्न तत्पिबेत् ॥ ४३ ॥

( अन्वयः ) अकार्यकरणात्, कार्याणाम्, च, विवर्जनात्, अकाले मन्त्रभेदात्, च, भीतः, 'स्यात्' येन, माद्येत्, तत्, न, पिबेत् ॥ ४३ ॥

( सुबोधिनी ) कर्तुं योग्यं कार्यं, न कार्यमकार्यं तस्मात् अकार्यकरणात् =असत्कर्मानुष्ठानात्, कार्याणाम्=सत्कर्मणां, च, विवर्जनात्=अननुष्ठानात्, अकाले=इष्टसिद्धेः प्रागेव, मन्त्रभेदात्=मन्त्रप्रकाशात्, भीतः, सदा सावधान इत्यर्थः, स्यात्, येन=लोभादिना, माद्येत्=सद्-सद्विवेकशून्यो भवेत्, तत्, न, पिबेत्=न सेवेत ॥ ४३ ॥

( हिन्दी ) असत्कर्म करनेसे, सत्कर्म न करनेसे, अभीष्ट सिद्धिके पहलेही मन्त्रके फूट जानेसे सदा सावधान रहे। जिस लोभादिके कारण मनुष्य विवेक भ्रष्ट होजाता है, उसकी सेवा न करे ॥ ४३ ॥

विद्यामदो धनमदस्तृतीयोऽभिजनो मदः।
मदा एतेऽवलिप्तानामेत एव सतां दमाः ॥ ४४ ॥

( अन्वयः ) विद्यामदः, धनमदः, तृतीयः, अभिजनः, मदः, एते, अवलिप्तानां, मदाः, एत एव, सतां, दमाः ॥ ४४ ॥

( सुबोधिनी ) विद्याया मदः विद्यामदः, धनस्य मदः धनमदः, तृतीयः-अभिजनः = सहायः, मदः, एते, अवलिप्तानां = अहङ्कारिणां, मदाः, भवन्ति, एते = विद्यादयः, एव, सतां = सज्जनानां, दमाः = शान्तिलक्षणोपायाः, ( सन्तीति शेषः ) ॥ ४४ ॥

( हिन्दी ) घमण्डियोंको विद्या, धन, और सहायक परिवारका मद होता है परन्तु निरहंकारी इन्हीं तीनोंको पाकर नम्र और शान्त हुआ करता है ॥ ४४ ॥

असंतोऽभ्यर्थिताः सद्भिः क्वचित्कार्ये कदाचन ।
मन्यन्ते संतमात्मानमसंतमपि विश्रुतम् ॥ ४५ ॥

( अन्वयः ) क्वचित, कार्ये, कदाचन, सद्भिः, अभ्यर्थिताः, असन्तः, विश्रुतं, असन्तं, अपि आत्मानं सन्तं, मन्यन्ते ॥ ४५ ॥

( सुबोधिनी ) क्वचित्कार्ये, कस्मिंश्चित्कर्म्मणि, कदाचन, सद्भिः, सज्जनैः, अभ्यर्थिताः = प्रार्थिताः, असन्तः = दुर्जनाः, विश्रुतं = लोकविख्यातं, असन्तं = दुर्जनं, अपि, आत्मानं = स्वं, सन्तं = सज्जनं, मन्यन्ते = कल्पयन्ति ॥ ४५ ॥

( हिन्दी ) यदि सज्जन किसी समय, किसी कार्य वश दुर्जनोंसे प्रार्थना करते हैं तो वे सर्वत्र दुर्जन कहलाने पर भी अपनेको सज्जन ही समझते हैं ॥ ४५ ॥

गतिरात्मवतां सन्तः सन्त एव सतां गतिः ।
असतां च गतिः सन्तो न त्वसन्तः सतां गतिः ॥४६॥

( अन्वयः ) सन्तः आत्मवतां गतिः, संतः एव सतां गतिः, सन्तः असतां गतिः, तु असन्तः, न सतां, गतिः, ॥ ४६ ॥

( सुबोधिनी ) सन्तः = सज्जनाः, आत्मास्ति येषान्तेषां = आत्मवतां

=महानुभावानाम्, गतिः=शरणं, सन्तः, एव, सतां=सज्जनानाम्, गतिः=शरणं, सन्तः, एव, असतां=दुर्जनानां, 'अपि' गतिः=शरणं; 'परन्तु' असन्तः=दुर्जनाः, तु, न, सतां, गतिः=शरणम्, पाण्डवा एव त्वामुपकरिष्यन्ति, न तु त्वं तानिति भावः ॥ ४६ ॥

( हिन्दी ) आत्मज्ञानियोंकी, सज्जनोंकी और दुर्जनोंकी गति सज्जन ही हैं, असज्जन किसीका गति नहीं है, मतलब यह कि पाण्डव ही तुम्हारा उपकार कर सकेंगे तूँ उनका उपकार नहीं कर सकता ॥ ४६ ॥

जिता सभा वस्त्रवता मिष्टाशा गोमता जिता ।
अध्वा जितो यानवता सर्वं शीलवता जितम् ॥४७॥

( अन्वयः ) वस्त्रवता, सभा, जिता, गोमता, मिष्टाशा जिता, यानवता, अध्वा, जितः, शीलवता सर्वं जितम् ॥ ४७ ॥

( सुबोधिनी ) वस्त्रं विद्यते यस्यासौ तेन, वस्त्रवता=सद्वसनधारिणा, सभा, जिता, गौरस्यास्तीति तेन गोमता, मिष्टाशा=मधुररसाशा, जिता, यानं विद्यते यस्यासौ तेन यानवता=वाहनवता, अध्वा=मार्गः, जितः, शीलं विद्यते यस्यासौ तेन शीलवता=सत्स्वभाववता, सर्वं=जगदेवेत्यर्थः, जितं=स्वायत्तीकृतम् ॥ ४७ ॥

( हिन्दी ) शानदार पोशाक पहनने वाला सभाको, गौ रखने वाला, मीठे रसकी इच्छाको, सवारी वाला मार्गको जीतता है, लेकिन अच्छे चरित वाला सारे जगतको अपने वश कर लेता है ॥ ४७ ॥

शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति ।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥ ४८ ॥

( अन्वयः ) पुरुषे, शीलं, प्रधानं, तद्, यस्य, इह, प्रणश्यति, तस्य जीवितेन, न अर्थः, न धनेन ( अर्थः ) न बन्धुभिः ( अर्थः ) ॥ ४८ ॥

( सुबोधिनी ) पुरुषे, शीलं=सत्स्वभावः, 'एव' प्रधानं, तद्=शीलं, यस्य=यस्य पुरुषस्य, प्रणश्यति=विनश्यति, तस्य=तस्य-

शीलस्य, जीवितेन, न, अर्थः = प्रयोजनं, न, धनेन, ( अर्थः ), न, बन्धुभिः = कुटुम्बिजनैः, अतस्त्वया शीलं रक्ष्यमिति भावः ॥ ४८ ॥

( हिन्दी ) शील ही मनुष्यका प्रधान गुण है। जिसका शील नष्ट हो जाता है उसका जीवन, धन और कुटुम्ब आदि सभी व्यर्थ है ॥ ४८ ॥

आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम् ।
तैलोत्तरं दरिद्राणां भोजनं भरतर्षभ ॥ ४९ ॥

( अन्वयः ) हे भरतर्षभ ! आढ्यानां, मांसपरमं, मध्यानां, गोरसोत्तरम्, दरिद्राणां, तैलोत्तरं, भोजनं ( अस्ति ) ॥ ४९ ॥

( सुबोधिनी ) हे भरतर्षभ ! आढ्यानां = सधनानां, मांसं परमं प्रधानं यस्मिंस्तत् मांसपरमं = मांसप्रधानं, मध्यानां = धनिकदरिद्रभिन्नानां, गोरस उत्तरं यस्मिंस्तद् गोरसोत्तरम् = दुग्धप्रधानं, दरिद्राणाम् = दीनानां, तैलं उत्तरं यस्मिंस्तत्तैलोत्तरं = तैलप्रधानं, भोजनं(अस्तीतिशेषः)॥

( हिन्दी ) हे भरतश्रेष्ठ ! पूँजीपतियोंका मांसप्रधान, मध्यम श्रेणी वालोंका दुग्धप्रधान और दरिद्रोंका तैल प्रधान भोजन होता है ॥ ४९ ॥

संपन्नतरमेवान्नं दरिद्रा भुञ्जते सदा ।
क्षुत्स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ॥ ५० ॥

( अन्वयः ) दरिद्राः, सम्पन्नतरम्, एव, अन्नं, सदा, भुञ्जते, क्षुत्, स्वादुतां, जनयति, सा, च, आढ्येषु, सुदुर्लभा ॥ ५० ॥

( सुबोधिनी ) दरिद्राः, सम्पन्नतरं = स्वादुतरम्, मिष्टमित्यर्थः, एव, अन्नं, सदा, भुञ्जते = भक्षयन्ति, क्षुत् = क्षुधा, स्वादुनो भावः स्वादुता, तां, स्वादुतां = माधुर्यं, जनयति = उत्पादयति, सा = क्षुत्, च, आढ्येषु = धनिकेषु, सुदुर्लभा = दुर्लभतरा, ( भवतीति शेषः ) ॥ ५० ॥

( हिन्दी ) भूख ही आहारमें स्वाद पैदा कर देती है, पर वह भूख अमीरोंको नहीं लगती, इसलिये गरीबोंको मिलने वाला उसका स्वाद अमीरोंको दुर्लभ है ॥ ५० ॥

प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
जीर्यन्त्यपि हि काष्ठानि दरिद्राणां महीपते ॥ ५१ ॥

( अन्वयः ) हे महीपते ! लोके, प्रायेण, श्रीमतां, भोक्तुं, शक्तिः, न, विद्यते, दरिद्राणाम्, काष्ठानि, अपि, जीर्यन्ति, हि ॥ ५१ ॥

( सुबोधिनी ) हे महीपते !, लोके = संसारे, प्राणेण = प्रायशः, श्रीमतां = धनिकानाम्, भोक्तुं, शक्तिः, न, विद्यते, दरिद्राणाम् , काष्ठानि = दारूणि, अपि, जीर्यन्ति = परिणमन्ति, हि = निश्चितम् ॥ ५१ ॥

( हिन्दी ) हे राजन् प्रायः संसारमें अमीरोंमें भोजन पचानेकी शक्ति ही नहीं होती, किन्तु गरीब लोग लकड़ी भी खालें तो पच जाती है ॥ ५१ ॥

अवृत्तिर्भयमन्त्यानां मध्यानां मरणाद्भयम् ।
उत्तमानां तु मर्त्यानामवमानात्परं भयम् ॥ ५२ ॥

(अन्वयः) अन्त्यानाम्, अवृत्तिः, भयं, मध्यानाम्, मरणाद्, भयम्, उत्तमानां, मर्त्यानां, तु, अवमानात्, परं, भयम् ॥ ५२ ॥

( सुबोधिनी ) अन्त्यानाम् = दरिद्राणाम्, न वृत्तिरवृत्तिः = जीविकाविच्छेदः, भयं, मध्यानाम् = मध्यस्थितीनाम् , मरणात् = मृत्योः, भयं, उत्तमानां = उत्तमकोटिप्रविष्टानां मानिनां, मर्त्यानाम् = मनुष्याणाम् तु, अवमानात् = अपमानात्, परं = महत्, भयं ( अस्तीति शेषः ) ॥ ५२ ॥

( हिन्दी ) अधम पुरुष जीविकाके हानिसे, मध्यम पुरुष मृत्यूसे और उत्तमपुरुष अपमानसे बहुत डरते हैं ॥ ५२ ॥

ऐश्वर्यमदपापिष्ठा मदाः पानमदादयः ।
ऐश्वर्यमदमत्तो हि नापतित्वा विबुध्यते ॥ ५३ ॥

( अन्वयः ) ऐश्वर्यमदपापिष्ठाः, पानमदादयः, मदाः, हि, ऐश्वर्यमदमत्तः, अपतित्वा, न विबुध्यते ॥ ५३ ॥

( सुबोधिनी ) ऐश्वर्यमदः पापिष्ठो निन्दिततमो येभ्यस्ते ऐश्वर्यं स-

पापिष्ठाः = ऐश्वर्य्यमदनिन्दिततमाः, पानस्य मदादयः = पानमदादयः = सुरादिपानादयः, मदाः, हि = यतः, ऐश्वर्यमदेन मत्त ऐश्वर्यमदमत्तः = विभवमदादुन्मत्तः, अपतित्वा, न विबुध्यते = पतनं दारिद्र्यमप्राप्य न सावधानो न भवतीत्यर्थः ॥ ५३ ॥

( हिन्दी ) विद्यामद, पानमद आदिसे ऐश्वर्यमद विशेष हानि पहुचाने वाला है, क्योंकि ऐश्वर्यके मदमें मतवाला पुरुष अपने अधःपतन को देखकर भी सचेत नहीं होता ॥ ५३ ॥

**इन्द्रियैरिन्द्रियार्थेषु वर्तमानैरनिग्रहैः ।**
**तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव ॥ ५४ ॥**

( अन्वयः ) इन्द्रियार्थेषु, वर्तमानैः, अनिग्रहैः, तैः, इन्द्रियैः, ग्रहैः, नक्षत्राणि, इव, अयं, लोकः, ताप्यते ॥ ५४ ॥

( सुबोधिनी ) इन्द्रियाणामर्थेष्विन्द्रियार्थेषु = शब्दादिविषयेषु, वर्तमानैः = तदासक्तैः, न निग्रहो येषान्तेऽनिग्रहास्तैः = अवशीकृतैः, तैः, इन्द्रियैः, ग्रहैः = सूर्यादिग्रहैः, नक्षत्राणि, इव अयं लोकः = मानवलोकः, ताप्यते = पीड्यते ॥ ५४ ॥

( हिन्दी ) सूर्यादिग्रहोंसे जैसे नक्षत्रोंको पीड़ा होती है (अर्थात् उनके प्रतापसे नक्षत्रोंकी प्रभा क्षीण हो जाती है) वैसेही अपने विषयोंमें आसक्त और वशमें न आने वाली इन्द्रियां सबोंको कष्टमें डालती हैं ॥ ५४ ॥

**यो जितः पञ्चवर्गेण सहजेनात्मकर्षिणा ।**
**आपदस्तस्य वर्धन्ते शुक्लपक्ष इवोडुराट् ॥ ५५ ॥**

( अन्वयः ) आत्मकर्षिणा, सहजेन, पंचवर्गेण यः, जितः, तस्य, आपदः, शुक्लपक्षे, उडुराट्, इव, वर्धन्ते ॥ ५५ ॥

( सुबोधिनी ) आत्मानं कर्षतीति तेनात्मकर्षिणा = चित्ताकर्षकेण, सह जातस्तेन सहजेन = स्वाभाविकेन, पंचानां वर्गाणां समाहारस्तेन पंचवर्गेण = श्रोत्रादिना, यः—जितः, तस्य = पञ्चवर्गाकृष्टस्य, आपदः =

विपत्तयः, शुक्लपक्षे, उडुराट् = चन्द्रः, इव, वर्धन्ते = वृद्धिं प्राप्नुवन्ति ॥

( हिन्दी ) मनको विषयोंमें झुकाने वाली इन्द्रियोंके वशमें जो रहता है उसको आपत्तियां शुक्लपक्षमें चन्द्रमाके समान बढ़ती रहती है ॥५५॥

**अविजित्य य आत्मानममात्यान् विजिगीषते ।**
**अमित्रान्वाजितामात्यः सोऽवशः परिहीयते ॥ ५६ ॥**

( अन्वयः ) यः आत्मानं, अविजित्य, अमात्यान् अमित्रान्, वा विजिगीषते, अजितामात्यः, सः, अवशः परिहीयते ॥ ५६ ॥

( सुबोधिनी ) यः, आत्मानं = मनः, अविजित्य = अवशीकृत्य, अमात्यान् = मन्त्रिणः, अमित्रान् = कामक्रोधादीन्, रिपूंश्च, वा, विजिगीषते = जेतुमिच्छति, अजिता, अमात्या येन सोऽजितामात्यः = अवशीकृतमन्त्रि-मंडलः, सः, अवशः = विवशः, सन्, परिहीयते = विनश्यति ॥ ५६ ॥

( हिन्दी ) जो पुरुष पहले अपने मनको जीते बिना मन्त्रियोंको अपने वशमें रखना चाहता है अथवा शत्रुओंको जीतना चाहता है वह अन्तमें विवश होकर नाशको प्राप्त होता है ॥ ५६ ॥

**आत्मानमेव प्रथमं द्वेष्यरूपेण योजयेत् ।**
**ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥ ५७ ॥**

( अन्वयः ) प्रथमं, द्वेष्यरूपेण, आत्मानं, एव, योजयेत्, ततः, अमात्यान्, अमित्रान्, च, विजिगीषते तत् न मोघं भवति ॥ ५७ ॥

( सुबोधिनी ) प्रथमं = आदौ, द्वेष्यरूपेण = शत्रुरूपेण, आत्मानं = मनः, एव, योजयेत् = संयोजयेत्, ततः = आत्मविजयानन्तरं, अमात्यान् = इन्द्रियाणि, मंत्रिणश्च, अमित्रान् = कामादीन् रिपूंश्च, विजिगीषते = जेतुमिच्छति, तत्, न मोघं = न निष्फलं, भवति ॥ ५७ ॥

( हिन्दी ) मनुष्य पहले अपने मनको ही शत्रु समझकर उसे जीते पीछे इन्द्रियरूपीमंत्रियोंको और कामादि शत्रुओंको जीतनेकी इच्छा करे, ऐसा करने वाला मनुष्य कभी असफल नहीं होता ॥ ५७ ॥

वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥ ५८ ॥

( अन्वयः ) श्रीः, वश्येन्द्रियं, जितात्मानं, विकारिषु, धृतदण्डं, परीक्ष्यकारिणं, धीरं, अत्यन्तं, निषेवते ॥ ५८ ॥

( सुबोधिनी ) श्रीः=लक्ष्मीः, वश्यानि इन्द्रियाणि यस्य तं=वश्येन्द्रियं = जितेन्द्रियं, जित आत्मा येन तं जितात्मानं=वशीकृतमानसं, विकारिषु = दोषोत्पादकेषु (अपराधिषु) धृतो दण्डो येन तं धृतदण्डं= दत्तदण्डं, परीक्ष्यकारिणं=परीक्ष्यकर्मकर्तारं, धीरं, अत्यन्तं =अधिकं, निषेवते=भजति अजितमनस्कतया पुत्रादिवशस्त्वं न लक्ष्मीयोग्य इतिभावः ॥

( हिन्दी ) इन्द्रिय और मनको वशमें रखने वाले, अपराधीको यथोचित दंड देने वाले और परीक्षा करके काम करने वाले धीरको लक्ष्मी बड़े प्रेमसे चाहती हैं ॥ ५८ ॥

रथः शरीरं पुरुषस्य राजन्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशली सदश्वैर्दान्तैः सुखं याति रथीव धीरः ॥५९

( अन्वयः ) हे राजन् ! पुरुषस्य शरीरं रथः, आत्मा नियन्ता, इन्द्रियाणि, च अस्य अश्वाः, अप्रमत्तः, कुशली, धीरः रथी, इव, दान्तैः, तैः, सदश्वैः, सुखं, याति ॥ ५९ ॥

( सुबोधिनी ) हे राजन् !=हे धृतराष्ट्र !, पुरुषस्य, शरीरं, रथः, रथ इव वर्तत इति शेषः, 'तत्र' आत्मा=मनः, नियन्ता=सारथिः, इन्द्रियाणि, च, अस्य=रथस्य, अश्वाः, अप्रमत्तः=सावधानः कुशली= चतुरः, धीरः=गंभीरः, जीवः, रथी=रथवान् , इव, दान्तैः=वशगतैः, तैः=पूर्वोक्तैः, सदश्वैः=सदिन्द्रियाश्वैः, सुखं=यथा स्याद् तथा, याति=गच्छति, जीवनयात्रां करोतीत्यर्थः ॥ ५९ ॥

( हिन्दी ) हे राजन्, पुरुषका शरीर रथ है, आत्मा सारथी है, इन्द्रियां घोड़े हैं, उस रथमें सावधान होकर चतुर और धीर वह

जीवात्मा, रथीके समान, इन्द्रिय रूपी घोड़ोंको वशमें रख सुखपूर्वक जीवन यात्रा करता है ॥ ५९ ॥

**एतान्यनिगृहीतानि व्यापादयितुमप्यलम् ।**
**अविधेया इवादान्ता हयाः पथि कुसारथिम् ॥६०॥**

( अन्वयः ) अनिगृहीतानि, एतानि, अविधेयाः, अदान्ताः, हयाः, इव, पथि, कुसारथिं, व्यापादयितुं, अलम् ॥ ६० ॥

(सुबोधिनी) अनिगृहीतानि = अवशीकृतानि, एतानि = इन्द्रियाणि, अविधेयाः = अशिक्षिताः, अत एव अदान्ताः = उद्धताः, हयाः = अश्वाः, इव, पथि = मार्गे, जीवनमार्गे च, कुत्सितः सारथिस्तं कुसारथिं, मनश्च, व्यापादयितुं = पातयितुं, नाशयितुञ्च, अलं = समर्थानि भवन्ति ॥ ६० ॥

( हिन्दी ) काबूमें नरहने वाले चञ्चल घोड़ोंकी तरह वशमें नरहने वाली इन्द्रियां भी रथ और सारथीके समान शरीर और शरीर धारी जीवको सर्वनाशके गढेमें डालकर नष्ट कर देती हैं ॥ ६० ॥

**अनर्थमर्थतः पश्यन्नर्थं चैवाप्यनर्थतः ।**
**इन्द्रियैरजितैर्बालः सुदुःखं मन्यते सुखम् ॥ ६१ ॥**

( अन्वयः ) अजितैः, इन्द्रियैः, बालः, अर्थतः, अनर्थं, अनर्थतः, च एव, अर्थं, पश्यन्, सुदुःखं, सुखमन्यते ॥ ६१ ॥

( सुबोधिनी ) अजितैः = अवशीकृतैः, इन्द्रियैः, बालः = हिताहित-ज्ञानशून्यः, अर्थतः = अर्थहेतोः, अनर्थं, अनर्थतः = अन्यायतः, अर्थं, पश्यन् = जानन्, सुदुःखं = कठिनतरमपि दुःखं, सुखं, मन्यते = जानाति॥

( हिन्दी ) जो पुरुष इन्द्रियोंको वशमें नहीं रखसकता वह अनर्थको अर्थ, अर्थको अनर्थ और दुःखको सुख समझता है ॥ ६१ ॥

**धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः ।**
**श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥ ६२ ॥**

( अन्वयः ) यः, धर्माथौं, परित्यज्य, इन्द्रियवशानुगः, स्यात्, सः, श्रीप्राणधनदारेभ्यः, क्षिप्रं, परिहीयते ॥ ६२ ॥

( सुबोधिनी ) यः, धर्मश्चार्थश्च धर्माथौं = धर्मार्थपुरुषार्थौ, परित्यज्य, इन्द्रियाणां वशं अनुगच्छतीतीन्द्रियवशानुगः = इन्द्रियवशानुसारी, स्यात्, सः, श्रीश्च, प्राणाश्च, धनञ्च, दाराश्चेति तेभ्यः श्रीप्राणधनदारेभ्यः = लक्ष्मीजीवनधनस्त्रीभ्यः, क्षिप्रं = शीघ्रं, परिहीयते = त्यज्यते ॥

( हिन्दी ) जो मनुष्य धर्म और अर्थको छोड़कर इन्द्रियोंके वशमें हो जाता है, वह लक्ष्मी, प्राण, धन और स्त्री आदिसे जल्दी छूट जाता है ॥

**अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः ।**
**इन्द्रियाणामनैश्वर्यादैश्वर्याद्भ्रश्यते हि सः ॥ ६३ ॥**

( अन्वयः ) अर्थानाम्, ईश्वरः, यः, इन्द्रियाणाम्, अनीश्वरः स्यात्, सः, इन्द्रियाणाम्, अनैश्वर्याद्, ऐश्वर्यात् भ्रश्यते, हि ॥ ६३ ॥

( सुबोधिनी ) अर्थानाम् = धनानाम्, ईश्वरः = स्वामी, यः, इन्द्रियाणाम्, न ईश्वरोऽनीश्वरः = अप्रभुः, स्यात् सः, इन्द्रियाणाम्, ईश्वरस्यभाव ऐश्वर्यं, न ऐश्वर्यमनैश्वर्यं, तस्मादनैश्वर्यात् = अप्रभुत्वात्, ऐश्वर्यात् = वैभवात्, भ्रश्यते = भ्रष्टो भवति हि = निश्चितम् ॥

( हिन्दी ) जो सम्पत्तिका स्वामी होकर इन्द्रियोंको वशमें नहीं रख सकता वह, इन्द्रियोंको वशमें न रख सकनेके कारण, ऐश्वर्यसे शीघ्रही भ्रष्ट हो जाता है ॥ ६३ ॥

**आत्मनात्मानमन्विच्छेन्मनोबुद्धीन्द्रियैर्यतैः ।**
**आत्मा ह्येवात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ६४ ॥**

( अन्वयः ) यतैः, मनोबुद्धीन्द्रियैः, आत्मना, आत्मानं, अन्विच्छेत, हि, आत्मा, एव, आत्मनः, बन्धुः, आत्मा, एव, आत्मनः, रिपुः ॥ ६४ ॥

( सुबोधिनी ) यतैः = संयतैः, मनश्च, बुद्धिश्च, इन्द्रियाणि चेति, तैः, आत्मना = बुद्ध्या, आत्मानं = प्रत्यक् चैतन्यरूपं, अन्विच्छेद् = लब्धुमभि-

लपेत्, हि = यतः, आत्मा, एव, आत्मनः = स्वस्य, बन्धुः = मित्रं, आत्मा, एव, आत्मनः = स्वस्य, रिपुः = शत्रुः ( अस्तीति शेषः ) ॥ ६४ ॥

( हिन्दी ) मन, बुद्धि और इन्द्रियोंको वशमें रखकर मनुष्यको अपने हृदयमें अपने सम्बन्धमें विचार करना चाहिये। मनुष्य आपही अपना मित्र और आपही अपना शत्रु होता है ॥ ६४ ॥

बन्धुरात्मात्मनस्तस्य येनैवात्मात्मना जितः ।
स एव नियतो बन्धुः स एव नियतो रिपुः ॥६५॥

( अन्वयः ) येन, आत्मना, एव, आत्मा, जितः, तस्य, आत्मनः, आत्मा, बन्धुः, सः, एव, नियतः, बन्धुः, सः, एव, नियतः, रिपुः ॥६५॥

( सुबोधिनी ) येन = पुरुषेण, आत्मना = बुद्ध्या, एव, आत्मा = मनः, जितः, तस्य = पुरुषस्य, आत्मनः = मनसः, आत्मा एव, बन्धुः = मित्रं, सः = आत्मा, एव, नियतः, निश्चितः, बन्धुः, सः, एव, नियतः, रिपुः ( अस्तीति शेषः ) धीजय एव पुरुषार्थ इत्यर्थः ॥ ६५ ॥

( हिन्दी ) जिसने आत्मविचारसे अपने मनको वशमें कर लिया है, वही अपनी आत्माका मित्र है, मनही अपना मित्र है और मनही अपना शत्रु है ॥ ६५ ॥

क्षुद्राक्षेणेव जालेन झषावपि हितावुरू ।
कामश्च राजन् क्रोधश्च तौ प्रज्ञानं विलुम्पतः ॥ ६६ ॥

( अन्वयः ) क्षुद्राक्षेण, जालेन, अपिहितौ उरू, झषौ, इव, हे राजन् ! तौ कामः, क्रोधश्च, प्रज्ञानं, विलुम्पतः ॥ ६६ ॥

( सुबोधिनी ) क्षुद्राणि, अक्षीणि यस्मिंस्तेन क्षुद्राक्षेण = सूक्ष्मच्छिद्रेण, जालेन, अपिहितौ = आच्छादितौ, उरू = महान्तौ, झषौ = मत्स्यौ इव, हे राजन् ! तौ = उभौ, कामश्च क्रोधश्च, प्रज्ञानं = बुद्धिं, विलुम्पतः = नाशयतः ॥ ६६ ॥

( हिन्दी ) छोटे छेदवाले जालको बड़ी मछलियाँ जैसे फाड़ डालती हैं, वैसे-ही ज्ञानको काम और क्रोध नष्ट कर डालते हैं ॥ ६६ ॥

समवेक्ष्येह धर्मार्थौ संभारान् योऽधिगच्छति ।
स वै संभृतसंभारः सततं सुखमेधते ॥ ६७ ॥

( अन्वयः ) यः, धर्मार्थौ, समवेक्ष्य, सम्भारान्, अधिगच्छति, सः, वै, सम्भृतसम्भारः, सततं, सुखं, एधते ॥ ६७ ॥

( सुबोधिनी ) यः, धर्मश्चार्थश्च तौ, धर्मार्थौ, समवेक्ष्य = अनुरुध्य, सम्भारान् = जयसाधनानि, अधिगच्छति, सः, वै, स एव, सम्भृताः, सम्भारा येन सः सम्भृतसम्भारः = संचितसाधनः, सततं = निरन्तरं, सुखम् = आनन्दं, एधते = वर्धते ॥ ६७ ॥

( हिन्दी ) जो धर्म और अर्थका अच्छी तरह विचारकर जयसाधक कार्योंका आरम्भ करता है, वह विजय और ऐश्वर्य पाकर सदा सुख पाता है ॥ ६७ ॥

यः पञ्चाभ्यन्तराञ्छत्रूनविजित्य मनोमयान् ।
जिगीषति रिपूनन्यान् रिपवोऽभिभवन्ति तम् ॥६८॥

( अन्वयः ) यः, मनोमयान्, आभ्यन्तरान्, पञ्च, शत्रून्, अविजित्य अन्यान्, रिपून्, जिगीषति, तं, रिपवः, अभिभवन्ति ॥ ६८ ॥

( सुबोधिनी ) यः, मनोमयान् = मनसो विकारभूतान्, आभ्यन्तरान् = आन्तरिकान् श्रोत्रादीन्, पञ्च = पञ्चसंख्याकान्, शत्रून् = रिपून्, अविजित्य = अवशीकृत्य, अन्यान् = बाह्यान् रिपून्, जिगीषति = जेतुमिच्छति, तं = तथाविधं नरं, रिपवः = शत्रवः, अभिभवन्ति = आक्रमन्ति ॥ ६८ ॥

( हिन्दी ) जो अपने भीतर होनेवाले, श्रोत्रादि पाँच शत्रुओंको विना जीते बाहरी शत्रुओंको जीतनेकी इच्छा करता है, वह स्वयं शत्रुओं से पराभवको प्राप्त होता है ॥ ६८ ॥

दृश्यन्ते हि महात्मानो बध्यमानाः स्वकर्मभिः ।
इन्द्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः ॥६९॥

( अन्वयः ) महात्मानः, राजानः, इन्द्रियाणाम्, अनीशत्वात्, राज्य-विभ्रमैः स्वकर्मभिः, वध्यमानाः, दृश्यन्ते, हि ॥ ६९ ॥

( सुबोधिनी ) महान् आत्मा येषान्ते महात्मानः = महानुभावाः, राजानः = रावणादयः, इन्द्रियाणाम्, अनीशत्वात् = अप्रभुत्वात्, राज्य-विभ्रमैः = ऐश्वर्यविलासैः, स्वकर्मभिः = सीताहरणादिभिः, वध्यन्त इति वध्यमानाः, दृश्यन्ते, अवलोक्यन्ते, हि = निश्चितम् ॥ ६९ ॥

( हिन्दी ) बड़े २ राजा इन्द्रियोंको जीतनेमें असमर्थ होनेके कारण राज्यके मोहमें, ऐश्वर्य विलासमें, मग्न होकर अपने कर्मोंसेही मौतके मुँहमें जाते देख पड़ते हैं ॥ ६९ ॥

असन्त्यागात्पापकृतामपापांस्तुल्यो दण्डः स्पृशते मिश्रभावात्।
शुष्केणार्द्रं दह्यते मिश्रभावात्तस्मात्पापैः सह सन्धिं न कुर्यात्॥

( अन्वयः ) पापकृताम्, असन्त्यागात्, मिश्रभावात्, अपापान्, तुल्यः, दण्डः, स्पृशते, आर्द्रं, 'दारु' शुष्केण, मिश्रभावाद्, दह्यते, तस्मात्, पापैः, सह, सन्धिं, न, कुर्यात् ॥ ७० ॥

(सुबोधिनी) पापं कुर्वन्तीति पापकृतः तेषां पापकृताम् = पापिनां; असन्त्यागात्, मिश्रभावात् = मिश्रसम्बन्धात्, अपापान् = पापरहितान् अपि, तुल्यः = पापिसमानः, दण्डः, स्पृशते, आर्द्रं = जलार्द्रं, 'अपि, काष्ठं' काष्ठेन = शुष्ककाष्ठेन, मिश्रभावात् = सहभावात्, दह्यते = भस्मी-क्रियते, तस्मात्, पापैः = पापिभिः, सह, सन्धिं = सम्पर्कं, न कुर्यात् = नविदधीत ॥ ७० ॥

( हिन्दी ) जैसे सूखी लकड़ीके साथ गीली लकड़ी भी आगमें जल जाती है, वैसे ही पापियोंके साथ पुण्यात्माओंकोभी पापियोंके समान ही दण्ड भोगना पड़ता है ॥ ७० ॥

निजानुत्पततः शत्रून्पञ्च पञ्चप्रयोजनान् ।
यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ॥ ७१ ॥

( अन्वयः ) यः, मोहात्, उत्पततः, पञ्चप्रयोजनान्, निजान्, पञ्च, शत्रून्, न, निगृह्णाति, तं नरं, आपद्, ग्रसते ॥ ७१ ॥

( सुबोधिनी ) यः, मोहात् = अज्ञानात्, उत्पतन्तीति तानुत्पततः उत्पथेन गच्छतः, पञ्च प्रयोजनानि शब्दश्रवणादीनि येषान्तान् पञ्चप्रयोजनान्, पञ्चव्यापारान्, निजान् = स्वकीयान्, पञ्चशत्रून् = पञ्चेन्द्रियाणि, न, निगृह्णाति = न वशीकरोति, तं = तथाविधं नरं, आपद् = विपत्तिः, ग्रसते = निगिलति ( आक्रमत इत्यर्थः ) ॥ ७१ ॥

( हिन्दी ) जो मोहवश, शरीरमें रहनेवाले पाँच इन्द्रियरूपी शत्रुओं को कुमार्गमें जानेसे नहीं रोकता उसे चारो ओरसे विपत्तियाँ घेर लेती हैं ॥

**अनसूयार्जवं शौचं सन्तोषः प्रियवादिता ।**
**दमः सत्यमनायासो न भवन्ति दुरात्मनाम् ॥ ७२ ॥**

( अन्वयः ) अनसूया, आर्जवं, शौचं, सन्तोषः, प्रियवादिता, दमः, सत्यं, अनायासः, दुरात्मनां, न भवन्ति ॥ ७२ ॥

( सुबोधिनी ) न असूयानसूया = गुणेषु दोषाविष्करणाभावः, आर्जवं = सरलता, शौचं = पवित्रता, सन्तोषः, प्रियवादिता, दमः = शान्तिः, सत्यं, अनायासः, = अचाञ्चल्यं, दुरात्मनां = दुष्टात्मनां, न, भवन्ति ॥७२॥

( हिन्दी ) दुरात्मा पुरुष, गुणोंमें दोषोंका प्रगट करना, सरलता, पवित्रता, सन्तोष, मधुरभाषण, शान्ति, सत्यता, और स्थिरता आदिसे सदा दूर रहते हैं ॥ ७२ ॥

**आत्मज्ञानमनायासस्तितिक्षा धर्मनित्यता ।**
**वाक् चैव गुप्ता दानं च नैतान्यन्त्येषु भारत ॥७३॥**

( अन्वयः ) हे भारत ! आत्मज्ञानं, अनायासः, तितिक्षा, धर्मनित्यता, गुप्ता, वाक् च, एव, दानं, च, एतानि अन्त्येषु न ( भवन्ति )॥

( सुबोधिनी ) हे भारत !, आत्मज्ञानं = स्वस्वरूपावगतिः, अनायासः = अचाञ्चल्यं, तितिक्षा = सहनशीलता, धर्मे नित्यता—धर्मनित्यता

= नित्यधर्माचरणत्वं, गुप्ता वाक् = मितभाषित्वम्, असम्बद्धप्रलापा-द्रक्षितेत्यर्थः, दानं = दानकरणं, एतानि, गुणानि, अन्त्येषु, नीचेषु, न (भवन्तीति शेषः) स्वत्पुत्रेष्वार्जवादिकं गुप्तवाक्त्वं नास्तीति तेऽन्त्या इत्यर्थः ॥

( हिन्दी ) हे भारत ! आत्मज्ञान, शान्त प्रकृति, 'सहनशीलता, धर्ममें रति, सत्य और थोड़ा बोलना, दान देना, सब गुण नीचमें नहीं पाये जाते ॥ ७३ ॥

**आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् ।**
**वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥ ७४ ॥**

( अन्वयः ) अबुधाः, आक्रोशपरिवादाभ्याम्, बुधान्, विहिंसन्ति, वक्ता, पापं, उपादत्ते, क्षममाणः, विमुच्यते ॥ ७४ ॥

( सुबोधिनी ) अबुधाः = मूर्खाः, आक्रोशश्च परिवादश्च आक्रोशपरि-वादौ ताभ्यां = रूक्षभाषणनिन्दाभ्याम्, बुधान् = विदुषः, विहिंसन्ति = परिक्लिश्नन्ति, वक्ता = परुषनिन्दावादी, पापं = परुषनिन्दाजन्यपापं, उपादत्ते = गृह्णाति, क्षमत इति क्षममाणः = तितिक्षुः, पापाद् विमुच्यते, त्वत्पुत्रः परिवादको निन्दको हिंस्रश्चेति नासौ जयभागित्यर्थः ॥ ७४ ॥

( हिन्दी ) मूर्ख, निन्दा और रूखे वचनोंसे विद्वानोंको क्लेश देते हैं, ऐसा कहने वाला पापभागी होता है और क्षमा करने वाला पापसे छूट जाता है ॥ ७४ ॥

**हिंसा बलमसाधूनां राज्ञां दण्डविधिर्बलम् ।**
**शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम् ॥७५॥**

( अन्वयः ) हिंसा असाधूनां बलं, दण्डविधिः राज्ञाम् बलं, शुश्रूषा स्त्रीणाम् बलम्, क्षमा गुणवतां बलं ( अस्ति ) ॥ ७५ ॥

( सुबोधिनी ) हिंसा, साधूनां = दुर्जनानाम्, बलं, दण्डस्य विधिर्द-ण्डविधिः = दण्डविधानम्, राज्ञाम् बलं, शुश्रूषा = सेवावृत्तिः, स्त्रीणाम् बलं, क्षमा, गुणा विद्यन्ते येषां तेषां गुणवतां = गुणिनां, बलं (अस्तीति शेषः) ॥

( हिन्दी ) दुष्टोंका बल हिंसा है, दण्ड देना राजाका बल है, सेवा करना स्त्रीका बल है और क्षमा करना गुणियोंका बल है ॥ ७५ ॥

वाक्संयमो हि नृपते सुदुष्करतमो मतः ।
अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम् ॥ ७६ ॥

( अन्वयः ) हे नृपते ! वाक्संयमः, सुदुष्करतमः, मतः, अर्थवत्, विचित्रं च, बहु, भाषितुं, न, शक्यम् ॥ ७६ ॥

( सुबोधिनी ) हे नृपते ! वाचः संयमः वाक्संयमः = नियतं वचनं, अतिशयेन सुदुष्करः सुदुष्करतमः = कठिनतमः, मतः, अर्थवत् = सार्थकं, विचित्रं = चमत्कारयुक्तं, च, बहु = अधिकं, भाषितुं = वक्तुं, न शक्यम्, ॥

( हिन्दी ) राजन् वाणीका संयम बहुत कठिन है अर्थ और चमत्कार युक्त बहुत भाषण भी सहज नही है ॥ ७६ ॥

अभ्यावहति कल्याणं विविधं वाक् सुभाषिता ।
सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥ ७७ ॥

( अन्वयः ) हे राजन् ! सुभाषिता वाक्, विविधं, कल्याणं, अभ्यावहति, सा, एव, दुर्भाषिता, अनर्थाय, उपपद्यते ॥ ७७ ॥

( सुबोधिनी ) हे राजन् ! सुष्ठु भाषिता सुभाषिता = सूक्ता, वाक्, विविधं = बहुविधं, कल्याणं, अभ्यावहति = ददाति, सैव, वाक्, दुर्भाषिता सती, अनर्थाय = अकल्याणाय, उपपद्यते = समर्था भवतीत्यर्थः ॥

( हिन्दी ) हे राजन् ! मधुर और अच्छे वचन बोलनेसे कल्याण प्राप्त होता है और कड़ुआ वचन बोलनेसे अनर्थ प्राप्त होता है ॥ ७७ ॥

रोहते सायकैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ ७८ ॥

( अन्वयः ) सायकैः, विद्धं, परशुना, हतं, वनं, रोहते, वाचा, दुरुक्तं, बीभत्सं, वाक्क्षतम्, न, संरोहति ॥ ७८ ॥

( सुबोधिनी ) सायकैः = बाणैः, विद्धं = भिन्नं, परशुना = परशुनामायुधविशेषेण, हतं = छिन्नं च, वनं, रोहते = अंकुरितं भवति, किन्तु वाचा = वचनेन, दुरुक्तं = दुर्भाषितं, बीभत्सं = निन्दितं, वाक्क्षतं, = वाग्विद्धं, न पुनः संरोहति ॥ ७८ ॥

( हिन्दी ) बाणोंका घाव भरजाता है और कुल्हाडीसे काटा हुआ वनभी फिरसे पनपता है, लेकिन वाग्बाणोंसे उत्पन्न घाव नहीं भरता ॥

कर्णिनालीकनाराचा निर्हरन्ति शरीरतः ।
वाक्शल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः ॥७९॥

( अन्वयः ) ( जनाः ) कर्णिनालीकनाराचान्, शरीरतः निर्हरन्ति, वाक्शल्यः, तु निर्हर्तुं, न, शक्यः, हि सः हृदिशयः भवति ॥ ७९ ॥

( सुबोधिनी ) 'जनाः' कर्णिनालीकनाराचान् = कर्ण्यादिबाणविशेषान्, शरीरतः = देहात्, निर्हरन्ति = निष्कासयन्ति, वाक्शल्यः = वाग्बाण इत्यर्थः, तु. निर्हर्तुं = उद्धर्तुं, न, शक्यः, हि = यतः, सः = वाग्बाणः, हृदि शेते हृदिशयः = हृदिलीनः, भवतीति शेषः । कर्णी = कर्णाकृतिफलको बाणः, नालीकः = नलिकया प्रक्षिप्यो बाणः ॥ ७९ ॥

( हिन्दी ) कर्णिकादि बाण शरीरसे निकल सकते हैं, पर हृदयमें चुभा हुआ वचनरूपी बाण नहीं निकल सकता, वह उसीमें चुभा रह जाता है ॥ ७९ ॥

वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति राज्यहानि।
परस्य नाममर्मसु ते पतन्ति तान्पण्डितो नावसृजेत्परेभ्यः ॥

( अन्वयः ) वाक्सायकाः, वदनात्, निष्पतन्ति, यैः, आहतः, राज्यहानि, शोचति, ते परस्य न, अममंसु पतन्ति, पण्डितः, परेभ्यः, तान्, न अवसृजेत् ॥ ८० ॥

( सुबोधिनी ) वाच एव सायकाः वाक्सायकाः = वचनबाणाः, वदनात् = मुखात्, निष्पतन्ति = बहिर्निर्गच्छन्ति, यैः, आहतः = विद्धः,

'जनः' राम्यहानि = रात्रिन्दिव, शोचति = शोकं करोति, ते = वाग्बाणाः, परस्य = इतरस्य, न अमर्मसु = अपि तु मर्मस्वेव, पतन्ति = प्रविशन्तीत्यर्थः, अतः, पण्डितः = आत्मवत्परपीडाममंज्ञः, परेभ्यः = इतरेभ्यः, तान् = वाग्बाणान्, न अवसृजेत् = नप्रयुञ्जीत, सभायां द्रौपदीं प्रति दुर्वचनं वदतां त्वत्पुत्राणामपराधः सर्वथा क्षन्तुमयोग्य इति भावः ॥८०॥

(हिन्दी) वाग्बाण जिसके कलेजेको बेधते हैं, वह रात दिन शोकसे व्याकुल रहता है, वे बाण मर्मस्थल परही चोट करते हैं, इसलिये विद्वान् उन वाग्बाणोंका प्रयोग दूसरेके लिये न करे ॥ ८० ॥

यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽर्वाचीनानि पश्यति ॥८१॥

(अन्वयः) देवाः, यस्मै, पुरुषाय, पराभवं, प्रयच्छन्ति, तस्य, बुद्धिं, अपकर्षन्ति, सः, अर्वाचीनानि, पश्यति ॥ ८१ ॥

(सुबोधिनी) देवाः, यस्मै, पुरुषाय, पराभवं = पराजयं, प्रयच्छन्ति = ददति, तस्य = पुरुषस्य, बुद्धिं, अपकर्षन्ति, सः = अपहृतप्रज्ञः, अर्वाचीनानि = नीचकर्माणि, पश्यति = अवलोकते ॥ ८१ ॥

(हिन्दी) देव लोग जिसका पराभव चाहते हैं, पहले उसकी बुद्धि भ्रष्ट करदेते हैं, तब उसे नीचकर्मही दिखाई देता है ॥ ८१ ॥

बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते ।
अनयो नयसंकाशो हृदयान्नापसर्पति ॥ ८२ ॥

(अन्वयः) बुद्धौ, कलुषभूतायाम् (सत्यां) विनाशे, प्रत्युपस्थिते (सति) अनयः नयसङ्काशः (भवति) हृदयात्, न अपसर्पति ॥८१॥

(सुबोधिनी) बुद्धौ, कलुषभूतायां = विनष्टायाम्, सत्याम्, विनाशे, प्रत्युपस्थिते = वर्तमाने, सति, अनयः = दुर्नीतिः, नयेन संकाशो नयसंकाशः = नयतुल्यः, ज्ञायते, 'सच' अनयः = अनीतिः, हृदयात्, न अपसर्पति = बहिर्न निर्गच्छति ॥ ८२ ॥

( हिन्दी ) जब बुद्धि कलुषित हो जाती है, और विनाश सिरपर चढ बैठता है तब अनीति भी नीतिकी तरह मालूम पड़ती है और वह अनीति हृदयसे हटती नहीं ॥ ८२ ॥

सेयं बुद्धिः परीता ते पुत्राणां भरतर्षभ ।
पाण्डवानां विरोधेन न चैनामवबुध्यसे ॥ ८३ ॥

( अन्वयः ) हे भरतर्षभ ! पाण्डवानां, विरोधेन, सा, इयं, बुद्धिः, ते, पुत्राणाम् परीता, ( त्वम् ) एतान्, न, च, अवबुध्यसे ॥ ८३ ॥

( सुबोधिनी ) हे भरतर्षभ = हे भरतश्रेष्ठ !, पाण्डवानां, विरोधेन, सा, इयं, पूर्वोक्ता, बुद्धिः = अनयबुद्धिः ते = तव, पुत्राणाम्, परीता = व्याप्ता, एतान् = बुद्धिहीनान्, पुत्रान्, न, च, अवबुध्यसे = नजानासि ॥

( हिन्दी ) हे भरतश्रेष्ठ ! पाण्डवोंके विरोधमें उसी अनीति बुद्धिने आपके पुत्रोंको घेर रक्खा है, आप इसे नही जानते ॥ ८३ ॥

राजालक्षणसम्पन्नस्त्रैलोक्यस्यापि यो भवेत् ।
शिष्यस्ते शासिता सोऽस्तु धृतराष्ट्र युधिष्ठिरः ॥८४॥

( अन्वयः ) हे धृतराष्ट्र ! लक्षणसम्पन्नः, यः, त्रैलोक्यस्य, अपि, राजा, भवेत्, ते, शिष्यः, सः युधिष्ठिरः, शासिता, अस्तु ॥ ८४ ॥

( सुबोधिनी ) हे धृतराष्ट्र ! लक्षणेन सम्पन्नः, लक्षणसम्पन्नः = सर्वलक्षणलक्षितः, यः = यः कश्चित्, त्रैलोक्यस्य = त्रिभुवनस्य, अपि, राजा = अधिपतिः, भवेत् = भवितुमर्हेत्, 'यदि, तदा' सः, ते = भवतः, शिष्यः, युधिष्ठिर एव, शास्तीति शासिता = शासकः, अस्तु = भवतु ॥८४॥

( हिन्दी ) हे धृतराष्ट्र ! यदि कोई तीनों लोकका स्वामी हो तो आपका शिष्य युधिष्ठिर ही हो क्योंकि वही राज्य करनेकी योग्यता रखता है ॥ ८४ ॥

अतीत्य सर्वान्पुत्रांस्ते भागधेयपुरस्कृतः ।
तेजसा प्रज्ञया चैव युक्तो धर्मार्थतत्त्ववित् ॥ ८५ ॥

( अन्वयः ) धर्मार्थतत्त्ववित्, तेजसा प्रज्ञया च युक्तः, ते सर्वान् पुत्रान् अतीत्य भागधेयपुरस्कृतः ॥ ८५ ॥

( सुबोधिनी ) धर्मार्थयोः तत्त्वं वेत्तीति. तथाभूतः, तेजसा = प्रतापेन, प्रज्ञया = बुद्ध्या, च युक्तः, 'अयं' ते = तव, सर्वान् पुत्रान् = दुर्योधनादीन्, अतीत्य = अतिक्रम्य, भागधेये = राज्यांशे, पुरस्कृतः = अग्रतः कृतो वर्तते, मूर्धाभिषिक्तस्य पाण्डोः पुत्रास्ते राज्यार्हाः, अतथाभूतस्यान्धस्य पुनस्तव पुत्रास्ते दुर्योधनादयो न राज्यार्हा इति भावः ॥ ८५ ॥

( हिन्दी ) युधिष्ठिर धर्म और अर्थको जाननेमें, तेजस्विता तथा राजनीतिमें अद्वितीय है और आपके सभी पुत्रोंसे योग्य है ॥ ८५ ॥

**आनुक्रोशादानृशंस्याद्योऽसौ धर्मभृतां वरः ।**
**गौरवात्तव राजेन्द्र बहून्क्लेशांस्तितिक्षति ॥ ८६ ॥**

( अन्वयः ) आनुक्रोशात्, आनृशंस्यात्, योऽसौ, धर्मभृतां वरः (अस्ति) हे राजेन्द्र ! (सः) तव गौरवाद्, बहून्, क्लेशान्, तितिक्षति ॥

( सुबोधिनी ) आनुक्रोशात् = दयालुत्वात्, आनृशंस्याद् = अक्रौर्यात्, यः = पूर्वोक्तः, असौ = युधिष्ठिरः, धर्मं बिभ्रतीति तेषां धर्मभृतां = धर्मात्मनां, वरः = श्रेष्ठः 'अस्ति' सः, तव = भवतः, गौरवात्, त्वयि गुरुत्वबुद्ध्येत्यर्थः, बहून् = अधिकान्, क्लेशान् = दुःखान्, तितिक्षति = सहते ॥ ८६ ॥

( हिन्दी ) वे धर्मात्मा और दयालु होनेसे, क्रूरप्रकृति न होनेसे, आपके गौरवका ख्याल करनेसे अनेक क्लेशोंको सहन करते हैं, फिर भ युद्ध नहीं छेड़ते ॥ ८६ ॥

इति श्रीविदुरनीतौ द्वितीयोऽध्यायः ।